॥ श्रीः ॥

अवश्यमेवाऽवलोकनीयमेतदखिलम् ॥

# लक्ष्मीनारायणं काव्यम् ॥

श्रीयुतसकलविद्यावनविहारकण्ठीरवकवीन्द्रवर-

दुःखभञ्जनशर्म्मतनुजनुषा-
श्रीदेवीप्रसादशर्म्मकविना विरचितम् ॥
सुमङ्गलाख्यया व्याख्ययाऽलङ्कृतम्

॥ श्लोकौ ॥

श्रीदुःखभञ्जनकवीन्द्रतनूजनुष्श्री-
देवीप्रसादसुकवेः कवितामवेक्ष्य ॥
नन्दन्तिचेत्सुकृतिनः कृतिनः कृतिज्ञा-
निन्दन्तुतत्कुमतयो नहि काऽपि हानिः ॥ १ ॥

मातारामरतिर्यस्य पिताश्रीदुःखभञ्जनः ॥
सोऽयंदेवीप्रसादाख्यः कविर्विजयतेतराम् ॥ १ ॥

तेनैव

संशोधितश्च ।




तथ-

काशीयन्त्रालये मुद्रयित्वा प्रकाशितम् ।

॥ श्रीः ॥

श्रीयुतदुःखभञ्जनकवीन्द्रवरसूनुदेविप्रसादशर्म्मकविरचितम् ।

# लक्ष्मीनारायणकाव्यम् ।

श्रीगणेशायनमः । श्रीगुरुभ्योनमः ॥

सकलकलुषहारिचारुचञ्चत्परमपवित्रचरित्रचित्रितश्रीः ॥
नतविबुधनुत स्सतामुपास्यस्सदिशतु मे मतिमुज्ज्वलान्द्विपास्यः॥ १ ॥

नत्वासुरासुरनराञ्चितपादपद्मां वाग्देवतां स्वविहितस्यसुमङ्गलाख्याम् ।
काव्यस्यचारुतरचित्रपवित्रलक्ष्मीनारायणीयंचरितस्यकरोमिटीकाम् ॥
॥ १ ॥

अथ पश्चिमदेशमण्डलमण्डनायितभयहरपुरात्तजन्मश्रीकाशीनिवासकृतादरतत्रभवत्कविवरलक्ष्मीनारायणजीवनचरितात्मकं काव्यं चिकीर्षुः कान्यकुब्जवंशावतंसप्रशस्तयशोराशिविद्वच्चक्रचूडामणिश्रीयुतदुःखभञ्जनकवीन्द्रवरसूनुः श्रीदेविप्रसादशर्मनामा सत्कविः आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमिति शास्त्रात् त्रिविधमङ्गलमध्ये भुवनत्रयप्रथमपूज्यश्रीगणपतिदेवताकं स्वाभिलषितमाशीर्वादात्मकं मङ्गलं मनसि कृतमपि शिष्यशिक्षार्थमादौ निबध्नाति ॥ सकलेति ॥ सकलानि कलुषाणिहरतीतितच्छीलम् । चारुश्रवणसुभगम् चञ्चत्परिस्फुरत् परमपवित्रम् अत्यन्तपावनम् यत् चरित्रम् भक्तमनोरथपूरणादिकम् तेनचित्रिता अद्भुतीकृता श्रीःशोभादिरूपा यस्य येनवा सतथोक्तः ॥ नतैर्भक्तिनम्रैः विबुधैः देवैः विद्वद्भिर्वा नुतःस्तुतः । सताम् महात्मनाम् । उपास्यः । उपासितुमर्हः आराधनीयइत्यर्थः । सः प्रसिद्धः द्विपास्यः गजाननः । मेमह्यम् । उज्ज्वलाम् नवनवोन्मेषशालिनीम् । मतिम् । धियम् । दिशतुददातु । अत्रप्रेयोऽलङ्कारः । अनुप्रासश्च । पुष्पिताग्राछन्दः । लक्षणन्तुकान्यकुब्जवंशावतंसकवीन्द्रवरदुःखभञ्जनशर्मकृतवाग्वल्लभग्रन्थेप्रोक्तम् । अयुजिनयुगरेफतोयकारोयुजिचनजौजरगाश्चपुष्पिताग्रेति ॥ १ ॥

परमरुचिरशैलाधित्यकायां विराजद् ।
विहगकुलकुलायव्याकुलानोकहं सत् ॥
विलसदमलतीर्थस्तोमजुष्टं प्रतीच्या
न्दिशिविदितमुदारं सैन्धवारण्यमास्ते ॥ २ ॥

भूमौ कटाक्षइति संविदित ञ्जनाना मानन्ददाय्यमरकुण्डमखण्डशोभम् ।
पापापहारपरमादरणीयमुच्चै श्चित्रं सदा विजयते किल तत्रतीर्थम् ॥ ३

यस्मि न्स्नानादेव पापानि पुंसा मत्युच्चान्यप्याशु नश्यन्त्यवश्यम् ।
नानावर्णैः पङ्कजै रञ्जिताभे यत्र क्रीडन्त्यङ्गना निर्जराणाम् ॥ ४ ॥

तस्यावाचीदिग्गता ऽस्ति प्रशस्ता ध्वस्ताघौघा सश्चलक्ष्मीविहस्ता ॥
नानोद्यानोद्द्योतिकूला समस्ता न्यस्तावद्या वाहिनीशा वितस्ता ॥५॥

परमेति प्रतीच्यांदिशि । परमरुचिरावहुरमणायी या शैलस्यसैन्धवलवणप्रधानस्य । गिरेः अधित्यका ऊर्ध्वभूमिः । उपत्यकाद्रेरासन्नाभूमिरूर्ध्वमधित्यकेत्यमरः । तस्यां विराजन्तः तथाविहगकुलानां पक्षिगणानाम् कुलंजनपदेगोत्रेसजातीयगणेष्वपि इतिमेदिनी । कुलायैःनीडैः कुलायोनीडमस्त्रियामित्यमरः । व्याकुलाव्याप्ताः अनोकहावृक्षाः यत्र तत् । अनोकहः कुटःशालःपलाशीद्रुद्रुमागमाइत्यमरः । यद्वा विराजदितिभिन्नम्पदम् । सत् अत्युत्तमम् । विलशताशोभमानेन अमलेन तीर्थस्तोमेन पवित्रजलाशयादिसमूहेन जुष्टम् सेवितम् । युक्तमितियावत् । तीर्थंशास्त्रेगुरौयज्ञेपुण्यक्षेत्रावतारयोः ऋषिजुष्टेजलेसत्रिण्युपायेस्त्रीरजस्स्वपि । योनौपात्रेदर्शनेचेतिहेमचन्द्रः विदितम् प्रसिद्धम् उदारम्महत् । उदारोदातृमहतोरित्यमरः । सैन्धवारण्यम् आस्तेअस्ति । मालिनीछन्दः तल्लक्षणंतूक्तम् वाग्वल्लभे ननमयययुतेयं मालिनीभोगिलोकैरिति ॥ २ ॥

भूमाविति । तत्रसैन्धवारण्ये अमरकुण्डम् नाम तीर्थं सदाविजयते ॥ समुत्कर्षेणवर्त्तते विशेषणानिस्पष्टानि । पापापहारिवापाठः । वसन्ततिलकानामवृत्तम् तल्लक्षणंतूक्तंवाग्वल्लभे उक्तावसन्ततिलकातभजाजगौग इति ॥ ३ ॥

यस्मिन्निति स्पष्टमिदम् । शालिनीच्छन्दः तल्लक्षणंतूक्तं वाग्वल्लभे । मात्तौगौचच्छालिनीवेदलोकैरिति ॥ ४ ॥

तस्येति तस्य अमरकुण्डस्य अवाचीदिग्गता दक्षिणदिग्वर्त्तिनी वितस्ता।

पुरमतिरुचिरं विसारितस्या भयहरनामक मुत्तमप्रजाढ्यम् ॥
क्षितिवलयविभूषणायमानं त्रिदिवइव प्रतिभाति दिश्यवाच्याम् ॥ ६
श्रुतिविहितसुकर्ममर्म्मविज्ञाः समुचितशर्मनिदानधर्मधुर्य्याः ॥
अकलितकलिकालजन्यदोषं यदधिवसन्ति महीसुरा स्समन्तात् ॥ ७ ॥
निखिलजनमनोविनोदिशीलां कुलरमणीरमणीयतामवेक्ष्य ॥
चिरचितमपि मान मानतासा रतिरपि यत्र निजं जहातितूर्णम् ॥ ८ ॥
राजद्वृत्तै र्वित्तवित्तै स्सुचित्तै स्तैस्तै र्लोकै स्सेवित स्साधुगाथः
उद्यद्दीप्तिव्याप्तिविद्योतमानो यस्मि न्नासी द्योगिराड् कायनाथः ॥ ९ ॥

नाम वाहिनीशा नदीश्वरी अस्ति । कीदृशी समस्ता सर्वदापरिपूर्णा पुनः कीदृशी । न्यस्तावद्या दोषरहिता दूरीकृतस्वसेविपापादिदोषा वा स्पष्टमन्यत् सेति साप्रसिद्धेति । शालिनीच्छन्दः लक्षणं पूर्वमुक्तम् ॥ ५ ॥

पुरमिति तस्याः वितस्तायाः अवाच्यांदिशि भयहरनामकं पुरम् नगरं प्रतिभाति । कीदृशम् विसारि विस्तृतम् । स्पष्टमन्यत् । पुष्पिताग्राच्छन्दः ॥ ६ ॥

श्रुतीति मर्मरहस्यम् । निदानंत्वादिकारणम् । स्पष्टमितरत् । पुष्पिताग्राच्छन्दः ॥ ७ ॥

निखिलेति यत्रपुरे निखिलानांजनानां मनांसि विनोदयति स्वकुलाचारेण ह्लादयतिइतितच्छीलं शीलंयस्याः सातामु । कुलरमणीनां सद्वंशोद्भवसुन्दरीणाम् रमणीयतांमञ्जुलताम् अवेक्ष्यदृष्ट्वा विचार्य वा आनतासती सा प्रसिद्धा रतिःकामपत्नी अपि विरचितम् आजन्मसम्पादितमपि मानम् । सौन्दर्यादिगर्वम् तूर्णम् तत्समकालमेव जहातित्यजति । पुष्पिताग्राच्छन्दः ॥ ८ ॥

राजदिति यस्मिन् पुरे कायनाथो नाम योगिराड् योगीन्द्रः आसीत् । कीदृशः राजद्वृत्तैः प्रशस्तचरितैः वित्तवित्तै धनप्रसिद्धैः सुचित्तैः निर्मलमानसैः तैस्तैः प्रसिद्धैः लोकैर्जनैः सेवितः समर्चितः । पुनः की० । साधुगाथः सुष्टुचरितः । पुनः की० । उद्यद्दीप्तिव्याप्त्यासमुच्छलद्योगतेजोविस्तारेण विद्योतमानः प्रकाशमानः । शालिनीच्छन्दः ॥ ९ ॥

श्रीति । तस्मिन्भयहराह्वपुरेनगरे श्रीगुरुदयालुशर्म्मा । आसीत् । कीदृशः विलसद्धर्म्मा । महासुकृती । धर्मादनिचकेवलादित्यनिच् । पुनः कीदृशः ।

श्रीगुरुदयालुशर्म्मा विलसद्धर्म्मा प्रसिद्धसत्कर्म्मा ॥
बृहदुज्ज्वलप्रशंसो वंशवतंसः प्रभावजितहंसः ॥ १० ॥
विद्याविनयविवेकप्रमुखगुणौघै र्युतो नुतो धीरैः ।
तस्मि न्पुरे समृद्ध्या सहितो महित स्सुधामा ऽऽसीत् ॥ ११ ॥
परोपकरणव्रत स्सकलशास्त्रपारङ्गतः
सदा सुजनवन्दित स्स्तुतमतिःसदानन्दितः ॥
सुदैवसहितो हितो ऽतिमहितो महार्थेहितो ।
हजूरिरिति विश्रुतः खलु सुत स्तदीयो ऽभवत् ॥ १२ ॥
रुचिरचिरचितश्री श्चारुचश्चचरित्र ।
स्स्मरहरचरणाब्जाराधनैकाग्रचित्तः ॥

वंशवतंसः स्वकुलशेखरः । अवतंसोनस्त्रियांस्यात्कर्णपूरेचशेखरे । इतिमेदिनी वष्टिभागुरिरल्लोपमित्यादिनाअकारलोपः पु० क्लीः प्रभावेनप्रकाशेनजितः प्रभयाअवजितोवाहंसःसूर्यः येनसः । सुकीर्त्तिजितहंसइतिपाठेतु सुकीर्त्याशोभनयशसाजिताः हंसामरालायेनसः । रविश्वेतच्छदौहंसावित्यमरः । पु० क्ली० । सुधामाशान्ततेजाः शोभनगृहोवासुन्दरशरीरोवासमीचीनजन्मावा धामदेहेगृहेरश्मौस्थानेजन्मप्रभावयोरितिमेदिनी पु० क्ली० । महितः पूजितः सञ्जातोत्सवोवा । महपूजायांकर्मणिक्तः पक्षान्तरेमहशब्दात्तस्यसञ्जातातारकादिभ्यइतच् । स्पष्टमितरत् गीत्यार्ययोर्युग्ममिदम् तल्लक्षणन्तुवाग्वल्लभेप्रोक्तम् आर्यायामुखदलवद्दलंद्वितीयं च यत्र सा गीतिरिति डगणाः सप्तसगुरवोद्विजइहपष्ठः पयोधरोवापि । पष्ठंलघुचरमदलेविषमेनपयोधरः सार्येति ॥ १० ॥

स्वकुलवतंसइत्यपिपाठः ॥ ११ ॥

परेति । हजूरिः इतिनाम्नाविश्रुतः प्रसिद्धः तदीयः सुतः पुत्रः अभवत् । कीदृशः सद्भिः आनन्दितः । पु० क्ली० । महान्पूज्योवृहद्वाअर्थः यस्य तत् ईहितं चेष्टितंयस्यसः तथोक्तः । तनुजन्तुस्तदीयोभवदितिवापाठः । पृथ्वीछन्दः तल्लक्षणंतूक्तंवाग्वल्लभे । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति ॥ १२ ॥

रुचिरेति यः हजूरिः अवद्यहीनः सकलदोषविरहितः अधमजनसंसर्गशून्यइतियावत् अभवत् । निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः कुपूयकुत्सिताव-

कृतसुकृतसमूह स्सत्कृतीशः कृतीशः ।
प्रविदितवरविद्यो ऽवद्यहीनो ऽभव द्यः ॥ १३ ॥
यस्य चारुचरितं ततं मतं लोकशोकहरणो चितश्चितम् ।
सच्चमत्करणकारणं परं कस्य नो मनासि मोदमादधात् ॥ १४ ॥
तुच्छीकृतामृतमरीचियशोऽभिशोभी प्रोद्यत्प्रभावभरतर्जितवैरिवर्गः ।
दीव्यद्विभानिवहनिर्जितजातवेदा वेदोक्तधर्मधरधीरतरस्तरस्वी ॥ १५ ॥
सत्यप्रचारनिरत स्सदय स्सदाय स्सौन्दर्यमन्दिरमय स्सदय स्सदायः ।
कल्याणभाजनमहीनमहामहीयान् सभ्यस्सभाजनमहीनमहामहीयान् ।१६।
धन्यो विनीतजनताघनतापहारी मान्यः प्रसन्नवदनो ऽकदनो वदान्यः ।
सौजन्यजन्यगरिमाऽतिगभीरचेता नेताऽजयज्जगतिशम्भुपरायणःसः ।१७।

द्युखेटगर्ह्याणकाः समाः । इत्यमरः । स्पष्टमन्यत् मालिनीछन्दः ॥ १३ ॥

यस्येतिस्पष्टम् । रथोद्धताछन्दः । तल्लक्षणंतूक्तंवाग्वल्लभे रात्परैर्नरलगै-रथोद्धतेति ॥ १४ ॥

तुच्छीकृतेतिस्पष्टम् । वसन्ततिककावृत्तम् ॥ १५ ॥

सत्येति सदयः दयायुक्तः । पुनः कीदृशः । सदायः दायेनयुक्तियुक्तभाषणेन दानेनवासहवर्त्तमानः । दायस्सोल्लुण्ठभाषणे । विभक्तव्यपितृद्रव्येतथाहरणदानयोरितिमेदिनी ॥ पु० ॥ सन् समीचीनः अयः शुभावहदैवंयस्यसः । अयश्शुभावहोविधिरित्यमरः । पु० । सदासर्वदाआयोलाभोयस्यसः । पुनः की० । सौन्दर्यमन्दिरमयः । अतिसुन्दरइतियावत् । पु० । कल्याणस्य मङ्गलस्यभाजनम्पात्रम् । पु० । अहीनांसर्पाणाम् । इनःस्वामीशेषः तद्वत्महामहीयान् । अतिमहत्तरः । अतिव्यवहारभारसहइतियावत् । पुनः । सभ्यः । कुलीनः । आर्यः । सज्जनः । साधुर्वा । महाकुलकुलीनार्यसभ्यसज्जनसाधवइत्यमरः । पु० । नहीनंमहस्तेजोयस्ययेनवासः । पु० । महउत्सवः अस्यास्तीतिमही । पु० सभाजनम्सत्कारम् सदस्संस्थजनंवा यातीतियान्प्राप्नुवन् । सन् । आगामिनाश्लोकेनास्यसम्बन्धः । वसन्ततिलकावृत्तम् ॥ १६ ॥

वैशेषिकमिदम् धन्यइतिसहजूरिः जगतिअजयत् सर्वोत्कर्षेणवर्त्ततेस्म । स्पष्टमितरत् वसन्ततिलकावृत्तम् । वैशेषिकम् ॥ १७ ॥

आर्या समानशीला सात्विकलीलैकरागिणी गुण्या ।
श्रीनारायणदेवी नाम्ना तद्धर्म्मपत्न्या ऽऽसीत् ॥ १८ ॥

गौर्या गिरीश इव सिन्धुजयेव विष्णुः शच्या पुरन्दर इव क्षपया शशीव ।
सद्विद्यया नर इव प्रभयेव सूर्य्यः पत्न्या तया भिमतया स विराजते स्म॥१९॥

तौ दम्पती वचनकायमनोभिरेनोहीनौ यथा विधि जितेन्द्रियशत्रुवर्गौ ।
सर्वेष्टदेश्वरपदाम्बुजयुग्मसेवा मेवाऽनिशं विदधतु र्निजसुप्रजाप्त्यै । २० ॥

अथा ऽभवद्भर्त्तु रवाप्तमाना सद्भागधेयोदयमोदमाना ।
चकासती सत्ववती सती सा स्वभक्तिसन्तुष्टशिवप्रसादात् ॥२१॥

इभगजकरिभूमीसम्मिते वैक्रमे ऽब्दे ।
विलसति साति मासे मार्गशीर्षे सुलग्ने ॥
शुभतिथिमति शस्ते वासरे भूरिभाग्या ।
सकलगुणगणाढ्यं सा ततो ऽसूत सूनुम् ॥२२॥

दिशः प्रसन्नाः सरितः शिवा म्भसः ।
समीरणाः सौख्यकरा नभो ऽरजः ॥

आर्येति स्पष्टम् । आर्याछन्दः ॥ १८ ॥

गौर्येतिस्पष्टम् । वसन्ततिलकावृत्तम् ॥ १९ ॥

ताविति तौदम्पती निजसुप्रजाप्त्यै स्वशोभनतनयलाभाय वचनकायमनोभिः कृत्वासर्वेष्टदेश्वरपदाम्बुजयुग्मसेवाम् यथाविधि विदधतुः । कीदृशौ । एनोहीनौपापरहितौ स्पष्टमन्यत् वसन्ततिलकावृत्तम् ॥ २० ॥

अथेति सती पतिव्रता सतीसाध्वीपतिव्रतेत्यमरः साश्रीनारायणदेवी सत्ववती अन्तर्वत्नी अभवत् । स्पष्टमन्यत् इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिरियम् । तल्लक्षणमुक्तवाग्वल्लभे । चेदिन्द्रवज्राचरणानियस्यामुपेन्द्रवज्राचरणानिचस्युः । तदोपजातिः कथिताकवीन्द्रैर्भेदाभवन्तीहचतुर्द्दशाऽस्याः इति ॥ २१ ॥

इभेति ततः भूरिभाग्या सा इभगजकरिभूमीसम्मिते अष्टाशीत्यधिकाष्टादशशततमे वैक्रमेऽब्दे वर्षे मार्गशीर्षे मासे विलसति सति शुभतिथिमति शुभतिथिविशिष्टे शस्ते शुभे वासरे सुलग्ने शोभनेलग्ने सकलगुणगणाढ्यम् सूनुम्पुत्रम् असूत । मालिनीछन्दः ॥ २२ ॥

मही महोत्साहसुशोभिनी तदा ।
समे तदीयोत्सवशंसिनो ऽभवन् ॥२३॥
नुतेन तेन तेजसा सुतेन सम्मतेन सा ।
बभौ जनन्य नन्यभासमानना समानना ॥२४॥
स्त्रियो मनोहारितरानना रणद्विभूषणा मङ्गलगीति माजगुः ।
मृदङ्गतूर्यादिकवाद्यजोध्वनि स्समन्ततो व्यापदिशां सुखञ्चखम् ॥२५॥
जातकर्मणि पुरोधसा कृते सत्कृतेन बहुशो धनादिभिः ।
आत्मजस्य लपनं समुज्ज्वलं मोद माऽऽप दऽवलोकय न्पिता ॥२६॥
कश्चि स्सभाजित स्तेन समाहूतो ऽच्छचेतसा ।
ज्योतिर्वि द्भूसुरश्रेष्ठो लब्धुं भूरि धनं ततः ॥२७॥
निर्माय सुफलं शुद्धं जन्मपत्रं प्रयत्नतः ।
लक्ष्मीनारायणं नाम्ना शिशु मेतं तदा व्यधात् ॥२८॥
प्रसन्नमानसो विभ्र द्वाचस्पतिसमानताम् ।

दिशइति समे सर्वे अन्यत्स्पष्टम् । वंशस्थंवृत्तम् । तल्लक्षणंतूक्तं वाग्वल्लभे जतौतुवंशस्थमुदीरितंजरौ इति ॥ २३ ॥

नुतेनेति मातजननी तेनसुतेनबभौ । कीदृशेन सुतेननुतेन । पु० की० । तेजसास्वप्रकाशेन उपलक्षितेन । पु० की० सम्मतेन सकलजनाभीष्टेन । कीदृशीसा । नअन्यस्यभया दीप्त्यासममाननंमुखंयस्याः सा । यद्वानअन्यस्यभाइवभायस्याः सा अनन्यभा इत्येकंपृथक्पदम् । तथासमंसदृशम् अविषमंवा आननंयस्यास्सापुनः की० समाननामाननासत्कृतिः तयासहिता प्रमाणिकाछन्दः । तल्लक्षणमुक्तंवाग्वल्लभे प्रमाणिकाजरौलगावित्ति ॥ २४ ॥

स्त्रियइतिस्पष्टम् वंशस्थंवृत्तम् ॥ २५ ॥

जातेति लपनम्मुखम् । स्पष्टमन्यत् । रथोद्धताच्छन्दः ॥ २६ ॥

कश्चिदितिसभाजितः सत्कृतः समाहूतः आकारितः अच्छचेतसा प्रसन्नमनसा तेन पित्रा स्पष्टमन्यत् । अनुष्टुप्छन्दः ॥ २७ ॥

निर्मायेति स्पष्टमन्यत् । युग्ममेतत ॥ अ० छ० ॥ २८ ॥

जगाद गणक स्तथ्या मिति वाणी मिम न्ततः ॥२९॥
भो भूरिभाग्य तवसूनुरयं प्रभावी भावी विलक्षणमतिः सुखदस्वभावः।
पूर्णायु रीशचरणाम्बुजयुग्मसेवी सत्यव्रतः सुकविमौलिमणि श्शरण्यः३०
सुशोभि सकला आशा यशो ऽस्या ऽऽच्छादयिष्यति ।
सज्जनेषु च सुप्रीति रमुष्यो चै र्भविष्यति ॥३१॥
सर्वलोकप्रियो धीरः श्रीलः शीलनिधिः सुधीः ।
अजातशत्रुरद्वेषी जेता जगति पण्डितान् ॥३२॥
तीर्थसेवी वदान्यो ऽसौ परोपकरणे रतः ।
योगवि द्योगसम्पन्नो ऽप्याश्चर्य्यं जनयिष्यति ॥३३॥
निर्दोषस्या तिभाग्यस्य महितस्य महीयसः ।
इति नानाविधाः सन्ति बालस्या ऽस्य गुणाः खलु ॥३४॥
भूदेवश्रेष्ठ विज्ञेन भवतैवं विचार्यताम् ।
ईदृग्लक्षणसम्पन्नः पुमान्ना ऽस्ति महीतले ॥३५॥
इत्युक्त्वा गतवति सत्यवाचि तस्मिन् ।
दैवज्ञे ऽर्चितचरणे निजं निकेतम् ॥
आनन्दोदितपुलका तनुं दधानो ।
विप्रेभ्यो बहुल मऽसौ वसु व्यतारीत् ॥३६॥

प्रसन्नेति गणकः ज्योतिर्विद्इमंशिशुपितरम् हजूरिम् । स्पष्टमन्यत् । अ० छ० ॥२९॥
भोइति भावीभविष्यति स्पष्टमन्यत् । व० छ० ॥ ३० ॥
सुशोभीतिस्पष्टम् ॥ ३१ ॥
सर्वेति जेताजेष्यति । स्पष्टमनयत् ॥ ३२ ॥
तीर्थेति वदान्यो बहुप्रदः । स्पष्टमन्यत् ॥ ३३ ॥
निर्दोषस्येति स्पष्टम् ॥ ३४ ॥
भूदेवेति स्पष्टम् ॥ ३५ ॥
इत्युक्त्वेति वसुधनम् व्यतारीत् अदात् स्पष्टमन्यम् ॥ ३६ ॥

पितुः प्रियस्य नो तनुः सुतस्य तस्य केवलम् ।
गुणव्रजो ऽपि सन्ततं ततो विवृद्धि मायया ॥ ३७ ॥
श्रीनारायणदेवी देवीसेवापरा पराचारा ।
आनन्दसिन्धुमग्ना जाता ताताऽतिलालने लग्ना ॥ ३८ ॥
एवं देवप्रसादा त्समधिगतसुतः सन्ततश्रीविलासो ।
दृष्ट्वा सूनोर्गुणानामुदयमयमयो मङ्गलै र्मोदमानः ॥
पत्नीरत्नेन यत्ना त्सह महसहितो भूसुरः श्रीहजूरिः ।
सूरिः सूरोपमो ऽसा वनुदिन मधिकं तं समन्ता दगोपीत् ॥ ३९ ॥
श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्रीदेविप्रसादकविना विहिते निबन्धे ।
सर्गोऽगम त्प्रथम एष पवित्रलक्ष्मीनारायणीयचरिते परिपूर्त्तिमत्र ।४०।

इतिश्रीमत्कान्यकुब्जप्रवरकवीन्द्रदुःखभञ्जनशर्म्मात्मजदेविप्रसादकवि-
रचितेकौशल्यगोत्रोत्पन्नलक्ष्मीनारायणशर्मकविवरजीवनचरि-
तात्मकेमंगलाङ्कलक्ष्मीनारायणकाव्येप्रथमःसर्गः।१।इति ।

पितुरिति स्पष्टम् प्रमाणिकाछन्दः ॥ ३७ ॥
श्रीति स्पष्टम् गीतिश्छन्दः ॥ ३८ ॥
एवमिति देवस्यशिवस्य प्रसादात् । अयमयः । शुभावहविधिप्रचुरः । महसहितः उत्सवयुक्तः अगोपीत् अरक्षीत् । स्पष्टमन्यत् । अस्मिन्काव्येप्रतिसर्गान्त्यश्लोकेषु मङ्गलशब्दप्रयोगोऽस्ति । स्रग्धरावृत्तम् लक्षणन्तूक्तं वाग्वल्लभे म्रभ्नैर्यानांत्रयेणत्रिमुनियतियुतास्रग्धराकीर्त्तितेयम् । इति ॥ ३९ ॥
श्रीति अत्रअस्मिन्निबन्धेग्रन्थएषः प्रथमः सर्गः परिपूर्त्ति समाप्तिम्अगमत् प्रापत् कीदृशेनिबन्धे पवित्रंशुभहेतुः लक्ष्मीनारायणीयं श्रीमत्कविवरलक्ष्मीनारायणसम्बन्धिचरितं यत्र स तस्मिन् । पु० की० । श्रीदुःखभञ्जनकवीन्द्रस्यतनूजनुः पुत्रः सचासौदेविप्रसादकविः तेनविहिते निर्मिते । देविप्रसादइत्यत्रङ्यापोः संज्ञाछन्दसोर्बहुलम् इत्यनेनह्रस्वत्वम् । व० छ० ॥ ४० ॥

इति श्रीस्वकृतस्य कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणशर्मजीवनचरितात्मकस्य लक्ष्मीनारायणकाव्यस्य सुमङ्गलाख्यायांव्याख्यायाम् प्रथमस्सर्गः ॥ १ ॥



२

# द्वितीयः सर्गः ।

अथ स्वपित्रा कृतरक्षणोऽसौ सुलक्षणोऽनुक्षणमेधमानः ।
प्रत्यङ्गसङ्गांसमपास्तभङ्गां लावण्यलक्ष्मीं सुतराम्पुपोष ॥ १ ॥
महामहस्वी महनीयमूर्त्तिःक्रीडन्वयस्यैस्सह चत्वरान्तः ।
उदारशीलश्शुभबाललीलःकल्याणशालीनितरांसरेजे ॥ २ ॥
विलोलचञ्चत्कलकिङ्किणीकाऽलङ्कारभामञ्जुलकोमलाङ्गः ।
स श्यामरक्षातिलकातिशोभी पित्रोरुदारां मुदमाततान ॥ ३ ॥
चञ्चत्कचप्रोल्लसितोत्तमाङ्गो न केवलङ्कोमलगीस्स्वपित्रोः ।
सुजातराजद्वदनो जनानांसाधारणानामपिसम्प्रियोऽभूत् ॥ ४ ॥
विभूषणानामतिदर्पणाभे मणिव्रजे मञ्जुनिजम्मुखाब्जम् ।
सङ्क्रान्तमश्रान्तमवेक्षमाणः परां मुदम्माणवकस्सलेभे ॥ ५ ॥
आरक्तभास्वन्मधुराधरेण द्युतश्चलत्कुण्डलमञ्जुकर्णः ।

अथेति असौ लक्ष्मीनारायणाख्यशिशुः एधमानो वर्द्धमानः समपास्तभङ्गामविच्छिन्नाम् अपराजितां वा स्पष्टमन्यत् उपजातिश्छन्दः ॥ १ ॥

महेति वयस्यैस्समवयोभिः बालैः चत्वरान्तः अङ्गणमध्ये स्पष्टमन्यत् उपजातिच्छन्दः ॥ २ ॥

विलोलेति विलोलाश्चञ्चलाः फलामधुरास्फुटरवाः किङ्किण्यः क्षुद्रघण्टिकाः येषु येषां वा ते च ते अलङ्कारा बहुविधानि भूषणानि तेषाम् भाभिःद्युतिभिः मञ्जुलानि सुभगानि अङ्गान्यवयवाः यस्य सः श्यामकज्जलनिर्म्मितत्त्वात्कृष्णवर्णम् यत् रक्षातिलकम् तेन अतिशोभते तच्छीलः सः लक्ष्मीनाराणाभिख्यशिशुः पित्रोर्जननीजनकयोः उदारां महतीम् मुदं हर्षम् आततान वर्द्धयामास उपजातिच्छन्दः ॥ ३ ॥

चञ्चदिति चञ्चन्तोमसृणत्वादिनाऽतिशोभमानाः येकचाश्चिकुराः तैः प्रोल्लसितमतिशोभमानम् उत्तमाङ्गंमूर्द्धा यस्यसः कोमलगीर्मधुरवचनः सुजातंसुन्दरम् राजच्छोभमानम् वदनम्मुखंयस्यसः लक्ष्मीनारायणाभिधानोबालःकेवलम् स्वपित्रोः प्रियः नाभूत् किन्तु साधारणानाञ्जनानामपि प्रियोहृदयहारी अभूदजायत उपजातिः ॥ ४ ॥ विभूषणानामिति अतिदर्प्पणाभेदर्प्पणादप्यधिकोज्ज्वले सङ्क्रान्तम्प्रतिबिम्बितम् माणवकोबालः अन्यत्स्पष्टम् उपजातिः ॥ ५ ॥

अथारक्तेत्यादिपञ्चभिःकुलकेन शिशुंवर्णयतिद्युतः प्रकाशितः कर्णान्तयोः

कर्णान्तविश्रान्तनितान्तकान्तक्रीडारसभ्रान्तसुपक्ष्म चक्षुः ॥ ६ ॥
भ्राजिष्णुभालश्शुचिरत्नमालः समुल्लसत्कोमलसत्कपोलः ।
मनोज्ञमन्दस्मितनन्दितश्रीविनिन्दितेन्दुश्शुभसुन्दरास्यः ॥ ७ ॥
लेखात्रयभ्राजिसुजातकण्ठः समोन्नतांसः कमनीयबाहुः ।
जिताच्छपद्मच्छविशोणपाणिर्वाणीगुणौघेन वशीकृतान्यः ॥ ८ ॥
विशालराजद्रमणीयवक्षारक्षामितश्चारुतरोदराभः ।
चकासदूरुश्चरणाब्जरोची दीव्यच्छरच्छीतमरीचिरोचिः ॥ ९ ॥
स्वर्णोर्म्मिकोद्यन्मणिखण्डरश्मित्विषाहसन्तीमिव बालचन्द्रम् ।
मातुर्गृहीत्वाङ्गुलिमेषगच्छन्कामप्यभिख्याम्परमामवापत् ॥ १०॥
पिता सुखस्पर्शतनुन्तनूजं निधाय पङ्केरुहकान्तमङ्के ।
आलोकमानोलपनन्तदीयं लेभेतरांनिर्वृतिमन्तरुच्चैः ॥ ११ ॥
यथायथावृद्धिमयात्सबालस्तथातथासिद्धिमगाद्गुणानाम् ।
पितासुदैवोदयमेवमेनेचित्तेचमत्कारचयञ्चतेने ॥ १२ ॥

विश्रान्ते नितान्तकान्तेऽतिरम्ये क्रीडारसेनभ्रान्तेचालिते सुपक्ष्मणीशोभनपक्ष्मयुक्ते चक्षुषीनेत्रे यस्यसः उपजातिः ॥ ६ ॥

भ्राजिष्ण्विति मनोज्ञं यन्मन्दस्मितम् तस्य तेन वा नन्दिता या श्रीस्सौन्दर्यलक्ष्मीः तया निन्दितोऽधःकृतः इन्दुर्येन सः तनुदन्तपङ्क्तिरित्यपिपाठः उपजातिच्छन्दः ॥ ७ ॥

लेखेति समावविषमौ सशोभौ च अंसौ स्कन्धौ यस्य सः वशीकृता अन्ये तटस्था जनाः अपियेन सः स्पष्टमन्यम् उपजातिच्छन्दः ॥ ८ ॥

विशालेति रक्षामितः पितृभ्याम् रक्षणमधिगतः चरणावब्जे कमले इव ताभ्याम् रोचते प्रकाशते तच्छीलः दीव्यन् यः शरच्छीतमरीचिश्शरच्चन्द्रः तस्य रोचिरिव रोचिः कान्तिर्यस्य सः इतरत्स्पष्टम् उपाजातिच्छन्दः ॥ ९ ॥

स्वर्णेति एषः लक्ष्मीनारायणाख्यः पृथुकः स्वर्णस्य या ऊर्म्मिकाऽङ्गुलीयकम् तत्र उद्यत्प्रस्फुरत् यत् मणिखण्डम् हीरशकलम् भित्तं शकलखण्डेवा पुंस्यमरः तस्य रश्मयश्शुभ्राः किरणाः तेषाम् त्विषादीप्त्या बालचन्द्रं नूतनेन्दुम् हसन्तीमिवेत्युत्प्रेक्षा मातुः श्रीनारायणदेव्याः अङ्गुलिम् गृहीत्वागच्छन्सन् कामपि अनिर्वचनीयाम् परमामुत्कृष्टाम् अभिख्यां शोभाम् अभिख्यानामशोभयोरित्यमरः अवापत्प्रापत् उपजातिः ॥१०॥

पितेति लपनं मुखम् निर्वृतिं सुखातिशयम् स्पष्टमन्यत् उपजातिः ॥११॥

यथेति स्पष्टम् पिता त्वित्यपि पाठः उपजातिः ॥१२॥

निर्वृत्तचूडोऽतिमतिस्समेतोमतोवयस्यैरमितप्रभास्यैः ।
वर्णावलिज्ञानितया समस्तेशास्त्रेऽधिकारित्वमसावयासीत् ॥ १३ ॥
ततोऽष्टमेऽब्देविहितोपवीतो वीतोपरोधङ्गुरुणाविनीतः ।
जपन्नवन्ध्यान्त्रिपदीन्त्रिसन्ध्यन्तेजश्चयञ्चारुमसावधत्त ॥ १४ ॥
ततोमहामोदमितोमहस्वी मोहेनहीनो महनीयकर्म्मा ।
वियन्नभोनन्दमहीमितेऽब्दे तातस्तदुद्वाहमहं व्यधत्त ॥ १५ ॥
अथोत्तमश्रीपरिवीतमूर्त्तिस्सानन्दसन्दोहमनास्सुधीस्सः ।
कुटुम्बयुक्तः परमाभिरामम्पुण्यंहरिद्वारमियायतीर्थम् ॥ १६ ॥
यत्रैधमानाधिकशोधबोधाव्याधूतवाधाविविधाभिधानाः ।
तपोधनाधर्म्मविधानधुर्याधीराधरित्रीविबुधावसन्ति ॥ १७ ॥
सुराऽसुराऽधीश्वरमौलिमालालसद्रजोराजितपादपद्मम् ।
धर्म्मार्थकामादिकदानदक्षंहरिं नरायत्र मुदा भजन्ते ॥ १८ ॥
अनेकजन्मार्ज्जितमप्यनल्पं यद्दर्शनादेवजनानिजाघम् ।
दूरंविहायाशुपवित्रचित्ताः प्रमोदयुक्तास्त्रिदिवं व्रजन्ति ॥ १९ ॥

निर्वृत्तेति निर्वृत्तचूडो जातचूडाकर्म्मा स्पष्टमन्यत् उपजातिः ॥१३॥

तत इति वीतो विगतः उपरोधः प्रतिबन्धो यस्मिन्कर्मणि तद्यथातथेतिक्रियाविशेषणम् विनीतश्शिक्षितः त्रिपदीङ्गायत्रीम् इतरत्स्पष्टम् उपजातिः ॥१४॥

तत इति । महामोदं महाहर्षम् । इतः प्राप्तः । वियन्नभोनन्दमहीमिते । एकोनविंशतिशततमे । अब्दे वर्षे । ततः पिता । श्रीहजूरिः । तस्य । निजात्मजस्य लक्ष्मीनारायणस्य उद्वाहमहं विवाहोत्सवम् स्पष्टमन्यत् उपजातिः ।१५।

अथोत्तमेति सः श्रीमान् हजूरिः इयाय जगाम इतरत्स्पष्टम् उपजातिः ॥१६॥

यत्रेति । यत्र । हरिद्वारेतीर्थे । एधमानो वर्द्धमानः अधिकशोधो बहुशुद्धिविशिष्टः । बोधो ज्ञानम् येषान्ते व्याधूतादूरीकृता बाधा यैर्येषां वा ते विविधाभिधानानानानामानः धर्म्मस्य शास्त्रोक्तस्य सुकृतस्य विधाने विधानस्य वा धुर्य्या धूर्वाहकाः धर्म्मकर्त्तारः धर्मोपदेशका वेतियावत् तपोधना स्तपोनिष्ठाः धरित्रीविबुधा भूसुराः वसन्ति उपजातिः ॥ १७ ॥

सुरेति सुराणामसुराणाञ्चयेऽधीश्वराः तेषाम् मौलिषुकिरीटेषुधम्मिल्लेषु वा मौलिःकिरीटेधम्मिल्ले चूडायामनपुंसकम् नाऽङ्गोकट्यैत्रिकयाम्भूमावितिमेदिनी यामालादिव्यपुष्पस्रजः तासाम् लसद्भिः प्रकाशमानैः रजोभिःपरागैः राजिते शोभिते पादावेव पद्मेयस्यसतम् स्पष्टमन्यत् उपजातिः ॥ १८ ॥

अनेकेति स्पष्टमेतत् उपजातिः ॥ १९॥

सुरोपमायत्र नरावसन्ति नार्य्योऽप्सरोभिस्तुलिता लसन्ति ।
कुटा अकल्पद्रुमभा न सन्ति सुनिष्कुटाश्चैत्ररथंहसन्ति ॥ २० ॥
यद्वासिनस्सत्पुरुषा जयन्ति हरिं शरण्यम्परिपूजयन्ति ।
आत्मानमुच्चैः पदवीं नयन्तिदेहावसाने निरयं न यन्ति ॥ २१ ॥
महीसुरस्तत्रपरप्रभावाम्भवोत्तमाङ्गस्रजमुज्ज्वलाभाम् ।
मुकुन्दचञ्चच्चरणारविन्दनिष्यन्दिभास्वन्मकरन्दभूताम् ॥ २२ ॥
हारायमाणा मवनेस्ससाराम्प्रशस्तकीर्त्तिंसुतरामुदाराम् ।
विचित्रसङ्गीतचरित्रभाराम्पयःपवित्रीकृतलोकवाराम् ॥ २३ ॥
जितोरुहीरांसुतराङ्गभीराम्पापौघाविध्वंसविधानधीराम् ।
द्विजव्रजभ्राजितरम्यतीरां सुधासमानोच्छलदच्छनीराम् ॥ २४ ॥

सुरेति कुटावृक्षाः वृक्षोमहीरुहश्शाखीविटपीपादपस्तरुः अनोकहः कुटश्शालः पलाशीद्रुद्रुमागमाइति सुनिष्कुटाश्शोभनगृहारामा इति चैत्ररथङ्कुवेरोद्यानमितिचामरः स्पष्टमन्यत् उपजातिः ॥ २० ॥

यद्दिति निरयंनरकम् नयन्तिनगच्छन्ति अन्यत्स्पष्टम् उपजातिः ॥ २१ ॥

अथमहीत्यादिभिश्चतुर्भिः कलापकेन श्रीगङ्गांवर्णयति सः श्रीहजूरिर्महीसुरः तत्र हरिद्वारतीर्थे गङ्गान्ददर्शसमवलोकयामास कीदृशीम् परःलोकोत्तरः प्रभावश्शरणगजनोद्धारकारिमाहात्म्यं यस्यास्ताम् पुनः की० भवोत्तमाङ्गस्रजं श्रीमहादेवशिरोमालाम् । पु० की० । मुकुन्दस्यवामनावतारस्यश्रीविष्णोः चञ्चत्परिस्फुरत् यत् चरणमेवारविन्दम् तस्मान्निष्यन्दते तच्छीलः भास्वान्प्रकाशमानः यः मकरन्दः तद्भूतान्तरस्वरूपाम् पु० की० अतएव उज्ज्वलाभांस्वच्छच्छविम् उपजातिः ॥ २२ ॥

हारेति पु० की० अवनेःपृथिव्याः हारायमाणाम् हारइवमुक्तामालेवाचरन्तीम् पु० की० ससारांसकललोकपवित्रीकरणबलशालिनीम् पु० की० प्रशस्तकीर्त्तिमुत्तमयशस्काम् पु० की० सुतरामत्यन्तम् उदारामभिलषितदात्रीम्महतींवा उदारोदातृमहतोरित्यमरः पु० की० विचित्रस्सद्भिर्गीतः चरित्रभारश्चरितसमूहोयस्यास्साताम् पु० की० पयसास्वजलेन पवित्रीकृतः लोकवारोजनव्रजोवा भुवनव्रजस्त्रैलोक्यमितियावत् ययाताम् लोकोजनेचभुवनइति स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाइतिचामरः उपजातिः ॥ २३ ॥

जितोरुहीरामिति जितास्तिरस्कृतः उरुमहान् हीरोवज्रापरपर्यायोगौरोमणिविशेषः यया साताम् शुभ्रकान्त्येतिशेषः पुनः की० द्विजाब्राह्मणाः हंसादयःपक्षिणोवा स्पष्टमितरत् उपजातिः ॥२४॥

चलत्तरङ्गा ङ्कृतभीतिभङ्गांहितप्रसङ्गां विगताभिषङ्गाम् ।
निध्वाननिर्द्धूतनदन्मृदङ्गाम्भवाब्धिसेतुं सददर्श गङ्गाम् ॥ २५ ॥
यादग्धदेहान्किल कापिलेन कोपानलेन प्रचुरोपतापान् ।
प्रसह्यसद्यस्सगरात्मजातान्सार्कं यशोभिर्नयतिस्मनाकम् ॥ २६ ॥
लोकत्रयीमङ्गलमोदहेतुर्या सेविताभिर्दिवि देवताभिः ।
मह्यां मनुष्यैरतिमानिता ऽधोनागैर्नुतानम्रशिरोधिभागैः ॥ २७ ॥
यद्दर्शनाद्द्यौस्सुलभैव यस्यास्सम्पर्कतः पाणिगता विमुक्तिः ।
यदम्बुपानादनिशङ्कनानाङ्कानाम सिद्धिर्नविनिर्णयोऽत्र ॥ २८ ॥
परिस्फुरत्पङ्कजरञ्जितायां शैवालजालैरतिमञ्जुलायाम् ।
मरालमालाभिरलङ्कृतायाङ्क्रीडन्ति यत्राप्सरसो ऽचलायाम् ॥ २९ ॥
लोकोत्तराया जगदुत्तमाया यस्यामहत्त्वंविधिविष्णुरुद्राः ।

चलदिति विगताभिषङ्गांविगतपराभवाम् सर्वसत्कृतामितियावत् अभिषङ्गः-पराभवे आक्रोशे शपथेचेतिहेमचन्द्रः अन्यत्स्पष्टम् उपजातिः ॥२५॥

अथ येत्यादिभिः पद्भिः कुलकेन भङ्ग्यन्तरेण श्रीगङ्गांवर्णयति याश्रीगङ्गा प्रसह्यप्रसन्नोभूययशोभिः कीर्त्तिभिस्सार्कंसह कापिलेनकपिलमुनिसम्बन्धिना कोपानलेन क्रोधाग्निना दग्धोभस्मीकृतः देहश्शरीरम् येषाम् तान् पुनः प्रचुरोप-तापान् मुन्यनादरहेतुकबहुलतरोत्तापान् उपतापस्त्वरायांस्यादुत्तापगदयोरपीति-तिमेदिनी सगरात्मजातान्सूर्यवंशोद्भवसगराह्वयनृपतिविशेषपुत्रान् पुराणप्रसि-द्धषष्टिसहस्रसङ्ख्याकान् नाकंस्वर्गम् सद्योझटिति स्पर्शसमकालमेव नयति-स्म अनैषीत् उपजातिः ॥२६॥

लोकेति लोकत्रय्याः मङ्गलमोदयोः कल्याणहर्षयोः हेतुर्निदानम् यद्वा लो-कत्रयीमङ्गलेन योमोदस्तस्यहेतुः याश्रीगङ्गा दिविस्वर्गलोकेआभिः प्रसिद्धाभिः देवताभिः इन्द्रादिभिर्देवैरित्यर्थः देवतास्त्रियामित्यमरः सेवितासमर्चिता यद्वाताभिः देवताभिः असेविअथ मह्याम्भूमौ मनुष्यैः अतिमानिताऽत्यन्तस-त्कृता अथ अधःपाताले नम्रशिरोधिभागैर्भक्त्यधःकृतग्रीवाप्रदेशैः नागैः सर्प्पैः नुतास्तुता अथग्रीवायांशिरोधिःकन्धरेत्यपीत्यमरः इन्द्रवज्राच्छन्दः स्यादिन्द्रव-ज्रायदितौजगौगइतितल्ल. वाग्व. ॥२७॥ यदिति स्पष्टम् उपजातिः ॥२८॥

परीति मरालमालाभिर्हंसपङ्क्तिभिः अचलायां स्थिरतरजलप्रवाहत्वादच-ञ्चलायाम् स्पष्टमितरत् ॥२०॥२९॥

लोकोत्तरायाइति लोकोत्तरायालोकविलक्षणमाहात्म्यायाः ॥पु०॥ जगदु

सर्वज्ञभावन्दधतोऽपिवक्तुं नैवक्षमन्तेवहुविस्मयन्ते ।: ३० ॥
सपुण्यवांस्तामविन्ध पुण्याम्भागीरथींभाग्यवशादुपेताम् ।
शीतानिलस्पर्शसुखस्थिरात्मातीरेतदीये वसतिं व्यधत्त ॥ ३१ ॥
स्नात्वामुदा तत्र सभाग्यशाली न केवल म्वाप तनोर्विशुद्धिम् ।
नानाजनुस्साश्रितपुण्यपुञ्जप्रभावशोभी मनसोऽपिनूनम् ॥ ३२ ॥
सुतोदयायाधिकधैर्यधारी निर्धिदयायास्सुनिधिस्स्वधुर्यः ।
सधर्म्ममर्म्मावनतत्परेभ्योददौ धनन्तत्र महीसुरेभ्यः ॥ ३३ ॥
अनुभूय जन्मफलमित्थमुत्थितं सुकृतै रसौपरमतुष्टमानसः ।
अविभङ्गमङ्गलयुतः कुटुम्बवान् पुनरराययौ भयहरं निजम्पुरम् ॥३४॥
श्रीदुःखभञ्जनकवीन्द्रतनूजनुःश्रीदेविप्रसादकविना विहितेनिबन्धे ।
सर्गस्समाप्तिमगमद्रमणीयलक्ष्मीनारायणीयचरितेऽयमिह द्वितीयः।३५।

उत्तमाश्रेष्ठा जगन्ति उत्तमानि श्रेष्ठानि ययाधा तस्याः विस्मयन्ते आश्चर्यम्प्राप्नुवन्ति स्पष्टमितरत् उपजाति वाग्व. ॥३०॥

सइति । सः सकुटुम्बः श्रीहजूरिः वसतिं निवासम् व्यधत्तकृतवान् इतरत्स्पष्टम् उपजातिः वाग्व ॥३१॥ स्नात्वेति स्पष्टतरमिदम् उपजातिः वाग्व० ॥३२॥

सुतोदेति सुतस्य उदयायवृद्ध्यै स्वस्यात्मनः स्वेषामात्मीयानांवा ज्ञातीनां वा धुर्योधूर्वाहकः सर्वकार्यनिर्वाहक्षमः स्वस्स्यात्पुंस्यात्मविज्ञातौत्रिष्वात्मीयेधनेऽस्त्रियामितिमेदिनी सः श्रीहजूरिः स्पष्टमितरत् उपेन्द्रवज्राछन्दः उपेन्द्रवज्राजतजागयुग्ममितितल्ल. वाग्व. ॥३३॥

अनुभूयेति स्पष्टतरमिदम् मञ्जुभाषिणी च्छन्दः सजसाजगौचयदिमञ्जुभाषिणीतितल्ल. वाग्व. ॥३४॥

श्रीति व्याख्यातपवायम्प्रथमसर्गे स्पष्टमन्यत् इतीति स्पष्टम् ॥३५॥

इतिश्रीस्वकृतस्य ० द्वितीयस्सर्गः ॥ २ ॥

——(०)——

# तृतीयः सर्गः ।

भूमीसुरस्सपुरमेत्यपुरारितेजारेजेरजोविरहितोरजनीशरम्यः ।
गम्यस्सदासुकृतसारसमेतसद्भिश्शान्तस्वभावसरणिम्प्रतिसम्प्रयातः॥१॥
सत्यक्तसर्वविषयः सुमनायमानः सार्द्धङ्गतस्पृहमनानिजधर्मपत्न्या ।
चक्रेस्मरारिचरणस्मरणंविदित्वा संसारभारमखिलंसमपेतसारम् ॥२॥
गम्भीरधीरधिकधीरतरस्सलक्ष्मानारायणस्समभिनन्द्यपितुर्न्निदेशम् ।
सद्ब्रह्मनिष्ठमथठाकुररामरत्ननामागमत्पिपठिषुश्शरणंसुभिक्षुम् ॥ ३ ॥
लोकप्रसिद्धमतिसंस्तुतबुद्धिमिद्धंसद्धर्म्मविद्वरमुदारतरंशरण्यम् ।
गुण्यङ्गुरुंवचनमानसकर्म्मभिस्तंनम्रोऽनिशंवशिनमीशमसेवताऽसौ॥४॥
सेवाप्रसन्नहृदयः सदयासमुद्रस्सद्गङ्गिनीमतिविकाशवतींमनीषाम् ।

भूमीति सः भूमीसुरः श्रीहजूरिशर्मा रेजे शुशुभे किङ्कृत्वा पुरंस्वनगरम् एत्यप्राप्य कीदृशः सः पुरारितेजाश्शङ्करवत्तेजस्वी पु० की० रजनीशरम्यः चन्द्रवत्कान्तः शिवपक्षेतु रजनीशेन भालस्थेनचन्द्रेणरम्यः विशेषणान्तराणि पक्षद्वयेस्पष्टानि वसन्ततिलकाच्छन्दः ॥ १ ॥

सइति सः श्रीहजूरिः अखिलंसंसारभारम् समपेतसारं निस्सारम् विदित्वाज्ञात्वा निजधर्मपत्न्याश्रीनारायणदेव्या सार्द्धंसह स्मरारिचरणस्मरणम् शिवपादध्यानम् चक्रे कीदृशस्सः त्यक्तसर्वविषयः शब्दादिविषयमात्रासक्तिविरहितः पु० की० गतस्पृहमना निस्पृहचित्तः पु० की० सुमनायमानः देववदाचरन् अत्र कर्तुःक्यङ् सलोपश्चेत्यनेनक्यङ् सलोपश्च अकृत्सार्वधातुकयोरित्यनेनदीर्घः लटःशत्रित्यादिनाशानच् आनेमुगितिमुगागमः वसन्ततिलकाच्छन्दः ॥ २ ॥

अथत्यक्तसर्वविषयत्वात्तथानिस्पृहचित्तत्वादखिलसंसारनिस्सारताज्ञानाधिकृततयाच तौदम्पती जीवन्मुक्तौसन्तौ ब्रह्मणिलीनौजातौ नचतयोः किञ्चिदपिकरणीयमवशिष्टमासीत् अतस्तयोरन्य दुवृत्तमनुक्त्वा एतावत्पर्यन्तमेवतयोः कथा कविना निबद्धा अतःपरम् लोकोत्तरचातुरीनिधे स्तत्सूनोर्लक्ष्मीनारायणस्य सुचरितम्प्रस्तूयते गम्भीरेति सः लक्ष्मीनारायणः पिपठिषुः पठितुमिच्छुस्सन् ठाकुररामरत्नम् नामेतिप्रसिद्धौ सुभिक्षुम् शरणमगमत् तत्समीपम्प्रापेत्यर्थः वसं० ॥ ३ ॥

लोकेति असौ लक्ष्मीनारायणः नम्रस्सन् तम् ठाकुररामरत्नं नामभिक्षुम् वचनमानसकर्मभिः अनिशं निरन्तरम् असेवत इतरत्स्पष्टम् वसं. ॥४॥

सेवेति गुरुः ठाकुररामरत्ननामा भिक्षुः अस्यलक्ष्मीनारायणस्य स्वप्रिय-

अस्याऽवलोक्यसकलाङ्गुरुरात्मविद्यामध्यापिपत्परमपुण्यनिधानमेनम् ।५।
विज्ञाय तत्तदितिहासपुराणसारं सोऽरम्प्रसन्नमनसः स्वगुरोः कृपातः ।
शोकापनोदनपरोत्तमलोकभाषाकाव्यप्रवीणपदवीमदवीयसीमैत् ।६।
वर्षे शुभे गजखनन्दमहीमितेऽसौ मासे सहस्यथ सिते सुतिथिप्रचारे ।
सोमोपमं समनुरूपमुदारादिष्टः प्रापत्सुतम्परमतुष्टशिवप्रसादात् ॥७॥
सज्जातकर्म्मनिखिलम्प्रविधाय विद्वान्विद्योतमानवपुषम्परितोषयुक्तः।
आह्लादहेतुसुषुमं सुखिनं स गोपीचन्द्राभिधानमकरोत्तनयम्प्रमोदात् ८
पुत्रोत्सवं समनुभूय कृती स लक्ष्मीनारायणो गुणगणैकनिकेतचेताः।
भूयोऽप्यतुष्टहृदयोऽध्ययनं विधित्सुस्सत्सूचितोऽमृतसरोनगरञ्जगाम।९।
तत्रातिबुद्धिरतिशुद्धियुतः प्रसिद्धाद्द्विद्वरादमरनाथगुरूपमानात् ।
सानन्दकन्दहृदयस्सदयात्सकश्चित्कालम्पपाठ किलकाव्यकलाकलापम् १०।
कौतूहली कलितकेलिरसौ ततः श्रीयुक्ताञ्चितामरपुरीमरिभिर्विमुक्ताम् ।
संसारचन्द्रनरनायकराजधानीमानीमनोज्ञचरितः परितश्शुभामैत् ॥ ११ ॥

यशिष्यस्य मनीषांमतिम् अतिविकाशवतोस्वह्नुविस्फुरन्तीम् अवलोक्यतत्तद्गुरुरेदृष्ट्वा सकलांसम्पूर्णाम् कलाभिश्चतुष्पष्टिसङ्ख्याकाभिस्सहवर्त्तमानांवा आत्मविद्यांस्वपरिचितामित्यांब्रह्मविद्याम्वाप्नं लक्ष्मीनारायणमध्यापिपत्पाठयतिस्म अन्यत्स्पष्टम् वसं. ॥ ५ ॥

विज्ञायेति स लक्ष्मीनारायणः अरं शीघ्रम् स्वल्पेनैव कालेनेत्यर्थः अदवीयसीं निकटवर्त्तिनीम् ऐत् अगच्छत् इण्गतौ कर्त्तरिलङ्इतरत्स्पष्टम् वसन्ततिलकाच्छन्दः ।६।

वर्षेइति असौ लक्ष्मीनारायणः गजखनन्दमहीमिते अष्टोत्तरैकोनविंशतिशततमेवर्षे सहसि मार्गशीर्षे मासे मार्गशीर्षे सहामार्ग आग्रहायणिकश्चसइत्यमरः सिते शुक्ले पक्षे इतरत्स्पष्टम् वसन्ततिलका. ॥ ७ ॥

सदिति स लक्ष्मीनारायणः तनयं स्वपुत्रम् गोपीचन्द्राभिधानम् नाम्ना गोपीचन्द्रम् अकरोत् आह्लादहेतुसुषुमम् द्रष्टृजनानन्दकारणीभूतपरमशोभम् सुषुमा परमा शोभेत्यमरः अन्यत्स्पष्टम् वसन्ततिलकाच्छन्दः ॥ ८ ॥

पुत्रोत्सवमिति वसन्ततिलका स्पष्टमन्यत् ॥ ९ ॥

तत्रेति तत्र अमृतसरोनगरे स लक्ष्मीनारायणः अमरनाथगुरूपमानाद्बृहस्पतिसदृशात् कश्चित्कालमित्यत्र कालाध्वनोरत्यन्तसंयोगेद्वितीयेति द्वितीया वसन्त० अन्यत्स्पष्टम् ॥ १० ॥

कौतूहलीति ततः सः लक्ष्मीनारायणः संसारचन्द्रोनामकश्चिन्नरनायकोराजा तस्य राजधानींमुख्यनगरीम् काङ्गडानामधेयाम् ऐदगच्छत् स्पष्टमितरत् वा.।११।

तत्र प्रसिद्धपरिगीतपरप्रभावाम्भावान्वितो भवभयापहरस्वभावाम् ।
देवीं स्वभक्तजनपूजितपादपद्मां वज्रेश्वरीं स नतवज्रिनुतामपश्यत् ॥१२॥
तद्दर्शनेन नयने सफले विधाय व्यामोहरोहरहितो निजमार्गसंस्थाम् ।
आलोकताऽऽकलितलोकहितस्वरूपान्देवीं महारुचिमचिन्त्यसुपूरणीं सः ।१३।
नानाभिधानविलसन्मणिमण्डितश्रीसंयुक्तरम्यतरहर्म्यवरप्रभाभिः ।
उद्दीपितन्दनुजवैरिपुरोपमानमानन्दनामकपुरं समगाच्चतस्सः ॥ १४ ॥
तत्र प्रतापपरितापितदैत्यवृन्दाम्वृन्दारकाञ्चितलसच्चरणारविन्दाम् ।
देवींशिलोच्चयजयच्छिखराधिवासामालोकताब्जनयनां नयनाभिधां सः१५
विघ्नस्ततो विततकीर्त्तिभरामरातिव्यूहापहारनिरतामुदितप्रतापाम् ।
तापापनोदनपराममरार्च्चिताङ्घ्रिञ्ज्वालाभिधाम्भगवतीमयमीक्षते स्म।१६।
तद्दर्शनप्रकटपुण्यचयप्रकाशी साशीरसावतिवशी शुभसत्फलाशी ।

तत्रेति तत्र पूर्वोक्तराजधान्याम् वज्रेश्वरीं नाम देवीम् भावान्वितो भक्तियुक्तः नतेन नम्रेण वज्रिणा शक्रेण नुतां स्तुताम् व. स्पष्टमितरत् ॥ १२ ॥

तदिति स लक्ष्मीनारायणः तस्या वज्रेश्वर्या दर्शनेन व्यामोहस्याविवेकस्य रोहणाङ्कुरेण रहितःसन् निजमार्गसंस्थामात्ममार्गमध्यवर्त्तमानाम् महतीरुचिर्दीप्तिर्यस्यास्साताम् अचिन्त्यसुपूरणींनामदेवीम् आलोकतापश्यत् स्पष्टमन्यत् व. ॥ १३ ॥

नानेति नानावहुधा अभिधानानिनामानियेषाम् तथाभूताः विलसन्तोयेमणयोरत्नानिहीरकादीनितैः मण्डितानिभूषितानि तथा श्रियासम्पदाशोभयावा संयुक्तानि अतएवरम्यतराणि अतिमनोहराणि यानि हर्म्यवराणि धनिनाम्श्रेष्ठगृहाःहर्म्यन्तुधनिनांवासइत्यमरः तेषाम् प्रभाभिरुद्दीप्तिभिः उद्दीपितम् अतएव दनुजवैरिपुरम् स्वर्गोवैकुण्ठोवा उपमानंसदृशंयस्यतत् आनन्दनामकपुरम् सलक्ष्मीनारायणः ततस्तदनन्तरम् समगात्प्रापत् व. ॥ १४ ॥

तत्रेति तत्रतत्समीपप्रदेशे शिलोच्चयस्यपर्वतस्य महीध्रेशिखरिक्ष्माभृदहार्य्यधरपर्वताः अद्रिगोत्रगिरिग्रावाऽचलशैलशिलोच्चयाइत्यमरः जयतिसर्वोत्कर्षेणवर्त्तमाने अत्युच्चे इतियावत् शिखरेश्रृङ्गे शिखरंश्रृङ्गंवा अधिवासोवसतिः वासस्थानंवायस्यास्ताम् अधिवासइत्यत्र भावेघञ् पक्षेऽधिकरणेघञ् व०स्पष्टमितरत् १५

विघ्नइति अयंलक्ष्मीनारायणः अपहारोऽत्रसंहारः तापोऽत्रशरणागतानाम् इतरत्स्पष्टम् व. ॥ १६ ॥

तदिति ततस्तदनन्तरम् साशीस्तद्देवीपूजाधिकृतदानसन्तुष्टजनाशीर्वादैस्सहवर्त्तमानः अतिवशीजितेन्द्रियतमः शुभानिसन्तिसमीचीनानि यानिफलानि

मार्गेण भूधरभवेन सुखं हृषीकेशाख्यंततोऽगमदभिद्रुचितेन तीर्थम् ॥१७॥
सत्सङ्गजन्यसुखसञ्चयभृत्सधन्यस्तस्मिन्मनोहरचरित्रचणो गुणज्ञः ।
नानामुनिप्रवरपूरितपर्णशाले चक्रे निवासमधिकत्विषि पञ्चमासान् ।१८।
युग्मेन्दुनन्दविधुसम्मितिके स वर्षे मेषङ्गते दिनमणौ जगति प्रसिद्धम् ।
तीर्थे मनोहरतरं हरिशब्दपूर्वद्वाराभिधं विबुधमोदकरन्ततोऽगात् ॥ १९ ॥
तत्रोत्सवं नयननन्दनमिन्दुकान्तिस्संवीक्ष्य शिक्षितमतिस्सधृतोरुशान्तिः ।
श्रीविश्वनाथनगरीं नगरीतिरम्यांवाराणसीमघविनाशकरीमयासीत् ।२०॥

मार्गवर्त्तिवृक्षोद्भवानि तत्तत्तीर्थयात्राजन्यसत्पुण्योद्भवानिवा अश्नातिअश्नुते वा इतितच्छीलः भूधरभवेनतत्तत्पर्वतवार्त्तिना अभितउभयतः द्रुभिर्वृक्षैःचितेनव्याप्तेन मार्गेणयथा वृक्षोमहीरुहश्शाखीविटपीपादपस्तरुः अनोकहःकुटश्शालःपलाशीद्रुद्रुमागमाइत्यमरः व. अन्यत्स्पष्टम् ॥ १७ ॥

सदिति तस्मिन्हृषीकेशनामकेतीर्थे मनोहरैस्सज्जनहृदयङ्गमैः चरित्रैर्जपानुष्ठानविद्याभ्यासादिभिः वित्तःप्रसिद्धः इतिमनोहरचारित्रचणः तेनवित्तश्चुञ्चुप्चणपावितिचणप्प्रत्ययः धन्यःपुण्यवान् धन्यःपुण्यवतित्रिष्वितिमेदिनी अधिकाबहुला त्विद् दीप्तिः नानाविधपुण्यात्मजनानिवासजन्यःप्रकाशइत्यर्थः यस्यथस्मिन्वा तत्र स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिर्दीप्तयइत्यमरः पञ्चमासानित्यत्रकालाध्वनोरिति द्वितीया व. इतरत्स्पष्टम् ॥ १८ ॥

युग्मेन्दुनन्देति सः युग्मेन्दुनन्दविधुसम्मितिकेद्वादशाधिकैकोनविंशतितमेवर्षे दिनमणौसूर्ये मेषंमेषराशिम् गतेसति मेषसङ्क्रान्तावित्यर्थः कुम्भाख्येमहोत्सवं इतियावत् विबुधानान्देवानांविद्वद्वराणाञ्चमोदकरंहर्षजनकंमोदकदासृच मोदकशब्दोऽत्रात्युत्तमभक्ष्यभोज्याद्युपलक्षणम् रादाने आतोऽनुपसर्गेक इतिकःप्रत्ययः व. अन्यत्स्पष्टम ॥ १९ ॥

तत्रोत्सवमिति इन्दुकान्तिश्चन्द्रद्युतिः शिक्षितमतिस्सज्जनप्रशंसनीयबुद्धिः धृतोरुशान्तिश्शान्तचित्तः सः लक्ष्मीनारायणः तत्रहरिद्वारे नयननन्दनंनेत्रानन्दप्रदम् उत्सवङ्कुम्भराशिस्थबृहस्पतिजनितंनानादेशागतसुजनकृतम् महासन्तोषस्वरूपम् वीक्ष्यदृष्ट्वासमनुभूयेत्यर्थः नगरीत्यामार्गवर्त्तिरुचिरतरतरुप्रचारेण रम्यांरमणीयाम् रीतिःप्रचारेस्यन्देचलोहकेद्वारकूटयोरितिविश्वप्रकाशः अघविनाशकरीन्दर्शनादेव पूर्वार्जितदुरितदूरीकरणातिचतुराम् वाराणसींश्रीकाशीम् अयासीदगात् याप्रापणे लुङ् यमरमनमातांसक्चेतिसक् अघविनाशकरीमित्यत्र कृञोहेतुताच्छील्यानुलोम्येषुइतिटः टिड्ढाणञ्द्वयसजित्यादिनाङीप् वसन्ततिलकाच्छन्दः ॥ २० ॥

सदिति सच्छास्त्रचिन्तनपरावेदान्तैकपरायणाः अतएव अतिसाद्भिःकुलश्री-

सच्छास्त्रचिन्तनपराः परितः परीता अन्तेवसद्भिरतिसद्भिरुपालसद्भिः ।
वाचस्पतिस्तुतवचोरचनाविताना अध्यासते दुरितभारहरा बुधा याम् ।२१।
उर्व्यामुदारपुरुषैः पुरुभिः परीतादिव्याऽऽत्मभूसुरसमूहसमीहिताऽलम् ।
आभात्यधोविहितभोगधराधिवासा लोकत्रयीव परमेश्वरनिर्म्मिता या ।२२।
तारस्वराधिकविचारपराविशिष्टासद्धर्मसारसहितायजुषाशिवेन ।
सामान्विताविजयतेऽविरतंसमर्च्चायुक्तात्रयीव बहुमानमिताहिताया ॥२३॥

लादिनाऽत्युत्तमैः उपालसद्भिस्समीपेशोभमानैः अन्तेवसद्भिश्छात्रैः परितस्सर्वतः परीताःपरिवृताः वाचस्पतिनाबृहस्पतिना स्तुताः वचोरचनाविताना वाणीसमुल्लासाः येषान्तेअथच स्वसेवकानाम् दुरितभारहराःपापव्यूहहरणक्षमाः बुधाविद्वांसः यांवाराणसीम् अध्यासतेआश्रितिष्ठन्ति अधिशीङ्स्थासाङ्कर्म्मेत्यादिना वाराणस्याःकर्मता कर्मणिद्वितीया व. ॥ २१ ॥

उर्व्यामिति याश्रीकाशी लोकत्रयीव अलमत्यन्तम् आभातिसामस्त्येनप्रकाशते कीदृशीश्रीकाशी उर्व्यांमहती तथा पुरुभिर्बहुभिः आसमन्तात् मुदमानन्दम् ऋच्छन्तीति आमुदाराःऋगताचस्मात्कर्म्मण्यण् तेचतेपुरुषाश्चतैः परीताव्याप्ता तथा दिव्यस्स्वधर्मानुष्ठानादलौकिकः आत्माशरीरम् अन्तःकरणं वा येषान्तेदिव्यात्मानः तेचते भूसुराब्राह्मणाः तेषाम् समूहैः समीहिताऽत्यर्कत्यर्थः आत्मापुंसिस्वभावेऽपिप्रयत्नमनसोरपि धृतावपिमनीषायांशरीरब्रह्मणोरपीतिमेदिनी तथाच अधोविहितस्तिरस्कृतः भोगधराणाम्भोगिनांनराणाम् आधेर्मानस्याव्यथायाः पुंस्याधिर्मानसीव्यथेत्यमरः वासस्स्थितिर्यस्यासातथाभूता तथाच परमाऽत्युत्कृष्टायद्वापरा मा लक्ष्मीर्यस्यायस्याम् वा सातथोक्ता तथाच ईश्वरेणशिवेननिर्मिता आत्मनाघटिता लोकत्रयीपक्षेतु उर्व्याम्पृथिव्याम् पुरुभिर्बहुभिः उदारैर्महद्भिः दातृभिर्वा पुरुषैः उदारोदातृमहतोरित्यमरः परीतातथा दिवि स्वर्गे आत्मभूर्ब्रह्माच सुरसमूहादेवसङ्घाश्च तैः समीहिता तथाच अधःपाताले विहितःकृतः भोगधराणांसर्प्पाणाम् अधिवासः यस्यायस्यांवासातथोक्ता तथाच परमेश्वरेणमहेश्वरेण निर्म्मिता व. तल्ल. वाग्व. ॥ २२ ॥

तारेति याश्रीकाशी त्रयीववेदत्रयींव अविरतमनिशम् सन्तताविरताऽनिशमित्यमरः विजयते कीदृशीया तारोऽत्युच्चैः स्वरः मनुष्यादीनांशब्दः यस्यांसा तथा अधि अधिकाः कवयः कवित्वशक्तिशालिनो विद्वांसः यद्वा अधिकाः वयःपक्षिणः गृहकपोतादयः तेषाम् चारश्चरणम् गतिरित्यर्थः तेन परा श्रेष्ठा परः श्रेष्ठारिद्भुतान्योत्तरे क्लीवन्तु केवले इति मेदिनी तथा सद्धर्माणाम् सारेण सहिता यद्वा सद्धर्मेभ्य उत्तमसुकृतेभ्यःसारसेभ्यः युग्मपक्षिभ्यःकमलेभ्योवा हिताहितकारिणीसारसःपक्षिभेदेन्द्वोःक्लीवन्तुसरसी-

सौदामिनीवसघनागमरम्यतायालक्ष्मीरिवात्तपुरुषोत्तमसङ्गशोभा ।
प्रालेयपर्वतसुतेवशिवेन जुष्टावाणीवसुन्दरसुवर्णमयी विभाति ॥ २४ ॥
याकामदाहचतुराननसंस्तुतोच्चैरार्या ऽश्रिताविबुधमोदविधानहेतुः ।
भूत्याभृतापरिवृताखलु भोगवद्भिर्विद्योततेशिवतनूरिवसत्यजस्रम् ॥ २५ ॥

रुहे इतिमेदिनी तथा अयंशुभावहंविधिन्दैवम् यद्वा आयंलाभंविस्तारंवाजुषतेसे-वते तेनशिवेनश्रीशङ्करेण विशिष्टासहिता तथा साम्नासान्त्वेनान्विता यद्वा आ सामस्त्येन मालक्ष्मीः तयासहितास्सामाः यद्वा अमनमामः ज्ञानम् तेन सहिता-स्सामाः अमगत्यादिषुइत्यस्माद्भावेघञ् गत्यर्थानाञ्ज्ञानार्थकत्वात् तैरन्विता तथा सम्यक्अर्चाभिःपूजाभिः युक्ता तथा बहुमानमतिसत्कारम् इताप्राप्ता तथा हिता सर्वहितकारिणी वेदत्रयीपक्षे तारः प्रणवः स्वराउदात्तादयस्त्रयः निषादादयस्स-प्तवा तेषाम् अधिकावचारएवपरउत्कृष्टोयस्याम् सा तथा सद्धर्म्मसारसहितेति-पूर्ववत् तथा शिवेनशुभकारकेण यजुषायजुर्वेदेन विशिष्टोत्तमासहितावा तथा साम्नासामवेदेन अन्विता तथा समाऽविषमा सशोभावा तथा ऋचाऋग्वेदेनयु-क्ता तथा बहुमानम्बहुप्रमाणम् इता यद्वा बहुमानेनमितापरिमिता यद्वा मानंमाः बहुःमामानंयस्यास्सा अतएव मितानभवतीत्यमिता नअमिता अनामताऽनम्री-कृतावा तथा हितेतिपूर्ववत् शिवेनेत्यत्र शिवङ्करोतिशिवयति शिवयतीतिशिवम् तेन त्त्करोतितदाचष्टे इतिणिच् पचाद्यच् मूलविभुजादित्वात्कःव व. छ. ॥२३॥

सौदामिनीति याश्रीकाशी सौदामिनीवविद्युदिवविभाति कीदृशी घननि-विडाः ये आगमावृक्षाः तेषांरम्यतयारमणीयतया सहिता वृक्षोमहीरुहःशाखी-विटपीपादपस्तरुः अनोकहःकुटश्शालःपलाशीद्रुद्रुमागमाइत्यमरः सौदामिनी-पक्षे घनागमोवर्षर्त्तुः तस्यतास्मिन्वा यारम्यता तयासहिता तथाच यावाराणसी लक्ष्मीरिवविभाति कीदृशीआत्तास्वीकृता पुरुषेषूत्तमानाञ्जनानांसङ्गेनशोभाय-यासा लक्ष्मीपक्षे आत्तासमधिगता पुरुषोत्तमसङ्गेनश्रीविष्णुसहवासेन शोभा-ययासा तथाच यावाराणसी प्रालेयपर्वतसुतेव श्रीपार्वतीव विभाति कीदृशीवा-राणसी शिवेनश्रीशङ्करेण शुभेनवा जुष्टासेवितापार्वतीपक्षे शिवेनश्रीशम्भुना जुष्टाप्रीता तथाच यावाराणसी वाणीवसरस्वतीव विभाति कीदृशी सुन्दरसुव-र्णमयी रमणीयहेमघटिता सरस्वतीपक्षे सुवर्णमयीशोभमानगौरवर्णस्वरूपा वाक्-पक्षे रमणीयाक्षरा व० वाग्व० ॥ २४ ॥

येति याश्रीकाशी शिवतनूरिवशम्भुशरीरमिव अजस्रंसततम् विद्योतते-शोभते कीदृशी कामदाकाममनोरथविषयीभूतंवरम् ददातीतितथाभूताडुदाञ्-दाने आतोऽनुपसर्गेकइतिकःप्रत्ययः हेतिस्फुटार्थेपादपूरणेचाव्ययम् तथा चतु-राननसंस्तुताब्रह्मदेवाभिष्टुता यद्वा चतुराणांविदुषाम् आननैर्मुखैः संस्तुता यद्वा हश्शिवः चतुराननोब्रह्मा ताभ्यांस्तुता यद्वा अः विष्णुः हःशिवः चतुराननोब्रह्मा

विद्योतमानभवना भवभूतिवित्ता विद्योतमानभवना भवभूतिवित्ता ।
रामाभिरीतिवियुता सहिता समायारामाभिरीतिवियुतासहितासमाया ।२६।

तैः संस्तुता अकारोवासुदेवस्स्यादिति इःकोपेवारणेहश्चतथाशूलीप्रकीर्त्तित-इतिचैकाक्षरकोशः तथा उच्चैः सप्तपुरीमध्येमहती श्रेष्ठेत्यर्थः तथा आर्यैरतिश्रेष्ठै-र्जनैः अञ्चितापूजिता यद्वा उच्चैरार्याञ्चिता अत्यन्तश्रेष्ठजनसंसेविता यद्वा उच्चै-रत्यन्तम् आर्यादाक्षायिणीभगवती तया अञ्चिताप्रीत्यासंवितासमाश्रितेतियावत् आर्यादाक्षायिणीचेत्यमरः तथा विबुधाविज्ञादेवावा विबुधोज्ञसुरे इतिमेदिनी ते-षाम् मोदविधानस्यहेतुःकारणम् तथा भूत्यामहैश्वर्येण भृतापरिपूर्णा तथा भो-गवद्भिर्भोगिभिःपुरुषैः परिवृताव्याप्ता तथा सतीसर्वथैवसमीचीना स्मरणीया दर्शनीया सेवनीयेतियावत् शिवतनूपक्षे कामस्यमन्मथस्य दाहदहने चतुरानि-पुणा तथा नसंस्तुतेतिन किन्तु सर्वैरेवसंस्तुता द्वौनकारौप्रकृत्यर्थङ्गमयतः तथा उच्चैःपूर्ववत् तथा आर्याभागवती तयापार्श्ववर्त्तिन्या अञ्चिता तथा विबुधमोदवि-धानहेतुः पूर्ववत् तथाभूत्याभस्मना भृताभूषिता भूतिर्भस्मनिसम्पत्तावित्युभय-त्रमेदिनी तथा भोगवद्भिस्सर्पैः कटककुण्डलादिरूपैः परिवृता व्याप्ता भोगस्सु-खधनेचाहिशरीरफणयोरपि पालनेव्यवहारेचयोषिदादिभृतावपीतिमेदिनी तथा सतीपूर्ववत् खलुनिश्चयेवाक्यालङ्कारेवा व० वाग्व० ॥ २५ ॥

विद्योतमानेति याश्रीकाशी विद्याब्रह्मविद्यारूपा अस्तीतिशेषः उतेतिवितर्के मालक्ष्मीरूपा विद्यतइतिशेषः कीदृशी श्रीकाशीविद्योतमानानिप्रकाशमानानि भवनानिहर्म्यादीनियस्यांसातथोक्ता तथा भवस्यशिवस्य भूतिरैश्वर्यम् सैववित्त-न्धनंयस्याःयस्यांवासातथोक्ता तथा नभादीप्तिर्येषान्तान्यभानि तथाभूतानिनभव-न्तीति अनभानि शोभमानानि वनानिबहुलनिष्कुटादयःप्रदेशाःजलानिवा यस्यां-सातथोक्तावनंनपुंसकंनीरेनिवासालयकानने इत्युभयत्रापिमेदिनी तथाच भवस्य-संसारस्यसम्बन्धिनी याभूःपृथिवी तस्याः ऊतिरवनम् तया वित्ताप्रसिद्धायद्वा भवेसंसारे भवन्तीतिभवभुवः प्राणिनः तेषाम् ऊतिस्तयावित्ता तथाच रामाभि-र्ललनाभिः सहिताविशिष्टा तथाच ईतिभिरतिवृष्ट्यादिभिःषड्भि र्वियुताविमुक्ता विरहितेत्यर्थः अतिवृष्टिरनावृष्टिर्मूषकाश्शलभाश्शुकाः प्रत्यासन्नाश्चराजानःषडे-ताईतयस्स्मृताइति तथाच समूसम्यक्आयोविस्तारोयेषान्ते यद्वा समोऽविषमः आयोयेषान्ते यद्वा समेषांसर्वेषाम् ऋतूनाम् इतियावत् आयोलाभोयत्र यद्वा समः मयालक्ष्म्या शोभयेतियावत् सहितः आयोविस्तारोयेषान्ते यद्वा माययास-र्वजनचित्तभ्रान्तिकारिण्यावृक्षस्थितिरचनारूपया लोके भुलनीवाडीतिनाम्नाप्र-सिद्धयासहितास्तेसमायाः समायाः आरामाउपवनानियस्यांसासमायारामाआरा-मस्स्यादुपवनङ्कृत्रिमंवनमेवयदित्यमरः तथाच अभि अभितः रीतिर्येषान्तेऽभि-रीतयः तेचतेवयःपक्षिणः तैर्युता अभिरीतिवियुता तथाच आसनमासः स्थितिः

आसउपवेशनेइत्यस्माद्भावेघञ् यद्वा असनमासोदीप्तिर्गतिर्वा असगतिदीप्त्या-दानेषुइत्यस्माद्भावेघञ् यद्वा असनमासःक्षेपणम् पापानांनिराकरणमितियावत् असुक्षेपणे इत्यस्माद्भावेघञ् तस्मैहिताऽनुकूलातथाच समाऽविषमासलक्ष्मीकावा २ ब्रह्मविद्यापक्षे कीदृशीब्रह्मविद्याविद्योतमानम्भवनंसत्तायस्यास्सातथोक्ता तथा-च अभवभूतिवित्ता अभवस्यमोक्षस्य अजन्मनःपरमेश्वरस्यवा भूतिरेववित्तंयस्याः यस्यां वा सा तथाच अनभंसशोभम् वनम् लक्षणयासमूहः यस्यास्सा यद्वा न-भवनम्प्राप्तिर्यस्यायस्यांवासाऽभवना नअभवनाऽनभवना प्राप्ता वा ब्रह्मप्राप्तिहेतु-भूतेतियावत् भूप्राप्तावितिचौरादिकाद्धातोःविभाषितणिजभावपक्षेल्युट् तथाच भवभूतिवित्ता भवेसंसारे भवन्तिते भवभुवःप्राणिनः भूसत्तायाम् कर्त्तरिक्विप् तेषाम् ऊतिः पञ्चक्लेशनिवारणादिरूपंरक्षणमितियावत् ऊतियूतिसातिहेतीत्या-दिनानिपातनादूतिशब्दस्सिद्धः तथा वित्ताप्रसिद्धा ऊतिस्स्त्रीरक्षणेस्यूता-विति वित्तङ्क्लीवन्धनेवाच्यलिङ्गङ्ख्यातेविचारितेइतिचमेदिनी तथाच रामाभिः रमन्तेज्ञानिनोयाखुतारामाःश्रुतयः रमुक्रीडायाम् हलश्चेति अधिकरणेघञ् पश्चात् टाप् ताभिःसहिता तथाच ईतिभिर्वियुताबियुक्ता यत्रदेशे ब्रह्मविद्यावान् तिष्ठति तत्र ईतीनांनामापिनसम्भवति तथाच समायारामा सम्यक् आयोविस्तारः ला-भोवायस्य यद्वा समः अयश्शुभावहोविधिर्यस्मात् सः समायः समायः आरामः आरमणमारतिः ययायस्यांवासा यद्वा असमायारामा नमाययासहितः आरामः सामस्त्येनरतिर्यस्याम् साआङ्पूर्वाद्रमुक्रीडायामित्यतः भावेघञ् तथाच अभि-रीतिवियुता अभितस्सर्वतः रीत्यापरिपाट्या विशेषेणयुतायुक्ता युमिश्रणाऽमि-श्रणयोरस्मात्कर्मणिक्तः टाप् तथाच आसायज्ञानाय स्वरूपास्थितयेवा हिता यद्वा असहिता असतिशोभतेइत्यसा असगतिदीप्त्यादानेषु इत्यस्मात्पचाद्यच्साचा-सौहिता इतिकर्म्मधारयःसमासः तथाच समा यद्वा असमा दुरवगाहा अज्ञानां-नृणामितिशेषः २ लक्ष्मीपक्षेतु कीदृशीमालक्ष्मीः विद्योतमानम् भवनङ्कमलरूपङ्ग्-हंयस्यास्साविद्योतमानभवना तथाच अभवोऽजन्मा विष्णुः तस्यभूतिः ऐश्वर्य्य-मेववित्तंयस्यास्सा अभवभूतिवित्ता तथाच अनभंसशोभम् वनंसमुद्रजलङ्यान-नंवाययया लक्ष्म्यधिकरणत्वात् सातथोक्ता अनभवना यद्वा नभवना नभायस्यतत् नभम् सहसुपेतिसमासः नभम् वनंसमुद्रजलंययासा यत्प्रभृति लक्ष्मीःसमुद्रा-द्बहिर्भूता तत्प्रभृति समुद्रजलंनिश्शोभमासीत् तथाच भवभुवाम्प्राणिनाम् ऊ-त्यारक्षणेन वित्ताप्रसिद्धा तथाच रामाभिस्स्वसखीभूताभिस्सुन्दरीभिः सहिता तथाच ईतिभिःपूर्वोक्ताभिः वियुता विरहिता लक्ष्मीकृपालेशतोऽपि ईतयोनस-म्भवन्ति यद्वा ईत्यागत्या वियुताविरहिता विष्णुसमीपएवस्थिरतयावर्त्तमाना इट्किट्कटीगतौ इत्यस्मिन् प्रश्लिष्टत्वात् ईधातोर्भावेक्तिन् तथाच समायः सम्य-ग्विस्तारलाभयुक्तः माययासहितोवा आरामःक्रीडोपवनंयस्याःसा तथाच अ-भिरीतिभिः विभिःपञ्जरस्थैर्हंसादिक्रीडापक्षिभिः युतायुक्ता तथाच आसायशो-

याद्यौरिवात्तसुमनस्सुरभिप्रकाशाविश्वम्भरेववसुधामहितासमिन्धुः ।
कादम्बिनीवविदितावनदाऽलकेवभ्राजद्धनाधिपतिपुण्यजनोच्चिमाना ।२७।

भार्याहिता यद्वा असहिता पूर्वोक्तवत् तथाच समाऽविषमा यद्वा असमाऽतुल्या इतिपक्षत्रयंऽपि अवदातम् विस्तरभयादन्येपक्षानालिखिताः व० ॥ २६ ॥

येति याश्रीकाशी द्यौरिवस्वर्गइव अस्तीतिशेषः कीदृशीश्रीकाशी आत्तास्स्वीकृताः सुमनसःपुष्पाणियेन सः आत्तसुमनाः सचासौसुरभिः वसन्तऋतुः सुमनाःपुष्पमालत्योःस्त्रियांनाधीरदेवयोरिति सुरभिश्शल्लकीमातृभिन्मुरागोषुयोषिति चम्पकेचवसन्तेचतथाजातीफलेपुमान् स्वर्णगन्धोत्पलेक्कीवंसुगन्धिकान्तयोस्त्रिषु विख्यातसोचवेधीरंचैत्रेऽपिचपुमानयमितिचमेदिनी तेन प्रकाशतेइति आत्तसुमनस्सुरभिप्रकाशा द्योपक्षे आत्तास्सुमनसोदेवायया सा आत्तसुमनाः तथा सुरभिःकामधेनुः तया प्रकाशते इतिसुरभिप्रकाशा आत्तसुमनाश्चासौ सुरभिप्रकाशाचेति कर्मधारयः तथाच यावाराणसी विश्वम्भरेव भूमिरिवास्तीति शेषः कीदृशीया वसुधायाम्भूमौ महितापूजिता अथच वसूनान्देवानां शङ्करादीनां धाम यद्वा वसूनान्धनानां धामस्थानम् व्यधिकरणविशेषणमेतत् तथाच हितानुकूला अथच वसूनि धनानि वसून्देवान्वा दधातीति वसुधा डुधाञ् धारणपोषणयोरित्यतः आतोऽनुपसर्गेकः चिच्चा तथाच महितासञ्जातोत्सवा महशब्दात् तदस्यसञ्जात इतितारकादित्वादित्तच् तथाच सिन्धुर्नदीश्रीगङ्गा तयासहवर्तते इतिससिन्धुः विश्वम्भरापक्षे वसुधेतिनाम्नाप्रसिद्धा तथाच महिता सञ्जातोत्सवा पूर्ववत् पूजितावा यद्वा वसुधाम पूर्ववत् तथाचहिता सर्वहितकारिणी तथाच ससिन्धुस्ससमुद्रासनदीकावा वसुस्त्वग्नौ देवभेदेनृपेरुचि योक्त्रशुष्के वसुस्वादौ रत्ने वृद्ध्योषधे धने इति सिन्धुर्नद्याङ्गजमदेऽब्धौ देशनदभेदयोरिति च हेमचन्द्रः तथाच यावाराणसी कादम्बिनीव मेघमालेवास्ति कीदृशीया विदिता प्रसिद्धा अवनं रक्षणम् ददातीति अवनदा दाधातोःपूर्ववत्कः कादम्बिनीपक्षे विदितापूर्ववत् तथा वनञ्जलन्ददातीति वनदा वनं नपुंसकं नीरेनिवासालयकानने इतिमेदिनी तथा च यावाराणसी अलकेवकुबेरनगरीवास्तिकीदृशीया भ्राजन्तश्शोभमानाः धनाधिपतयः बहुलधनसमृद्धाः पुण्याधर्मात्मानः जनामनुष्याः यस्याम् सा तथाच उत् उच्चैः विशिष्टउत्तमः मानः सत्कृतिः यस्यांयस्यावासातथोक्ता अलकापक्षे भ्राजन्तस्स्वैश्वर्यातिशयाद्राजमानाः धनाधिपतिः कुबेरश्च पुण्यजनायक्षगन्धर्वकिन्नरप्रभृतयश्चयस्यां तथा उत् उच्चैः विमानं व्योमयानंयस्यांसा व. ॥ २७ ॥

येति याश्रीकाशी विष्णोस्तनूरिवशरीरमिव सदासर्वदा चकास्ति कीदृशीया आनन्दयतीत्यानन्दकः शीतलत्वादिनाहर्षजनकः सचासौ आशुगःपवनः तद्वती तद्विशिष्टा नकर्मधारयान्मत्वर्थीयोबहुव्रीहिश्चेत्सदर्थप्रतिपत्तिकरइत्यस्य

यानन्दकाशुगवतीड्यसुदर्शनाभाविश्वम्भराभरणभावमिताऽभिरामा ।
कृत्ताहितासुखगराजनुताऽतिशेषाविष्णोस्तनूरिवसदासगदा चकास्ति ।२८।
यस्यामहोपरमपातकिनो ऽपिनूनन्देहावसानसमयेयमराजदूतैः ।
नाऽऽलोकितानिखिलयोगिजनैरलभ्यं सम्प्राप्नुवन्ति पदमापदमाश्वपास्य२९

असुव्वतइतिश्रीमद्भाष्यकारप्रयोगदर्शनादनित्यत्वमत्रानुसन्धेयम् वतीत्यत्रयुतेतिवापाठः अत्र नन्दयतीति नन्दकइतिवा तथाच ईड्यस्तुत्यम् शोभनं दर्शनं यस्याः एवम्भूता आभा दीप्तिः यस्याः सा तथोक्ता यद्वा ईड्या सुदर्शना आभा यस्याः सा तथोक्ता यद्वा ईड्यं शोभनं दर्शनं यस्याः सा यद्वा ईड्या चासौ सुदर्शनाचेति पृथक्पदम् तथा आसमन्तात् भातीति आभा इतिपृथक्पदम् आङ्पर्वाद्भादीप्तावित्यतः आतश्चोपसर्गे कः टाप् । पुनः की. विश्वम्भरायाः भूमेः आभरणभावम् भूषणत्वम् इ.ता प्राप्ता पुनः की. अभि अभितः रामाः रमण्यः यस्यां सा । पुनः की. कृत्तम् अहितम् अननुकूलम् असुखमेव गरं विषम् यया सा तथा अजैः ब्रह्मविष्णुशिवैः नुता स्तुता यद्वा कृत्तानि अहितानि पापानि दुःखानि वा ययासा कृत्ताहितेत्येकस्पृथक्पदम् तथा सुखं गच्छन्तीति सुखगाः तेच ते राजानः तैः नुता पुनः की. अतिक्रान्ताः शेषाः इतरे जनाः देशा वा इतराः पुर्यो वा यया सा पुनः की. गदैः रोगैः सहिता सगदा तथान भवती त्यसगदा यद्वानसगदाः रोगिणोजनाः यस्यांसा । विष्णुतनूपक्षे नन्दकःस्वखड्गः आशुगाःवाणाश्चतद्वती कौमोदकीगदाखड्गोनन्दकःकौस्तुभोमाणिरित्यमरः तथा ईड्यम् यत् सुदर्शनम् स्वचक्रम् । तेन आसमन्ताद्भातीति तथाभूता आङ्पूर्वाद्भादीप्तावित्यतः आतश्चोपसर्गेकःटाप् विच् वा शङ्खोलक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनमित्यमरः तथ विश्वम्भरायाः भरणेधारणेपोषणे वा भावम् सत्ताम् अनुरागमवा इता तथा अभिरामा मनोज्ञा तथा कृत्ताः खण्डिताः अहिताः शत्रवः ययासा तथा सु शोभनश्चासौखगराजः गरुडःतेननुता यद्वा कृत्ताः अहितानाम् शत्रूणाम् असवःप्राणाः येन सः सचासौखगराजःतेन नुता यद्वाकृत्ताहितासुश्चासौखगराजनुताचेतिकर्मधारयः । तथा शेषम् भुजगाधिराजम् अतिक्रान्ता अतिशेषा अत्यादयःक्रान्ताद्यर्थेद्वितीययेतिसमासः तथा सगदा गदया कौमोदक्या गदेन स्वानुजेन वा सहिता इति ॥ २८ ॥

यस्यामिति अहो आश्चर्ये यस्याम् श्रीकाश्याम् परमपातकिनः अतिदुष्कृतकारिणः अपि जनाः इति यावत् देहावसानसमये मरणकाले यमराजदूतैः नआलोकिताः नदृष्टा स्सन्तः आपदं नरकभोगरूपाम् आशु शीघ्रमेव अपास्य परित्यज्य अननुभूयेतियावत् निखिलयोगिजनैर्विविधयोगाभ्यासपारङ्गतजनैः अलभ्यमप्राप्यंपदं निर्वाणस्वरूपं वस्तु सम्प्राप्नुवन्ति लभन्ते नूनमिति निश्चये पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः व. ॥ २९ ॥

४

शेषस्सहस्रवदनोऽपि विलक्षणाया यस्या अशेषमहिमानमलंनवक्तुम् ।
नेत्रद्वयेनपरिपीय स तां सतांश्रीकाशीम्मतो मतिमतां नमाति स्म हर्षात् ॥३०॥
स्नात्वाऽतत्र विदिते मणिकर्णिकाख्ये तीर्थे महोदयमितं सदयासमूहम् ।
प्रत्यूहवारविनिवारणकारणंस श्रीढुण्ढिराजमतिसन्मतिदन्ददर्श ॥ ३१ ॥
सम्पूज्य तं विधिवदुज्ज्वलतेजसं स प्राज्ञस्सुमैरतिसुगन्धिभिराप्तशोभैः ।
सद्धूपदीपबलिसंवलितैः प्रसन्नस्वान्तोनितान्तनतकन्धरइत्यवादीत् ॥३२॥
हे ढुण्ढिराज गिरिजाहृदयारविन्दानन्दैकहेतुवरभास्कर सत्कर त्वम् ।
कारुण्यमन्दिरपुरन्दरवन्दिताङ्घ्रे सिन्दूरसुन्दरतनो विजयस्व नित्यम् ।३३।

शेषइति सहस्रवदनोऽपिदशशताननोऽपि शेषोभगवाननन्तः विलक्षणयाः लोकोत्तरायाः यस्या श्रीकाश्याः अशेषंसम्पूर्णम् महिमानंमहत्त्वम् वक्तुंवर्णयितुम् अलंसमर्थोन अस्तीतिशेषः सः लक्ष्मीनारायणः ताम् श्रीकाशीम् नेत्रद्वयेन-लोचनाभ्याम् परिपीय सादरन्दृष्ट्वा हर्षात्तल्लाभातिप्रमोदात् नमतिस्म अनंसीत् कीदृशस्सः मतिमतांसुधियाम् सतांसज्जनानाम् मतइष्टः व. छं. ॥ ३० ॥

स्नात्वेति अथ सः लक्ष्मीनारायणः तत्रश्रीकाश्याम् विदितेप्रसिद्धे मणिकर्णिकाख्येमणिकर्णिकानामधेये तीर्थेस्नात्वा महोदयंमहाप्रभावम् इतम्प्राप्तम् सदयासमूहङ्कृपासमुद्रम् प्रत्यूहवारस्यविघ्नसञ्चयस्य विघ्नोऽन्तरायःप्रत्यूहइति वारसङ्घातसञ्चयाइतिचामरःयद्विनिवारणंनिराकरणम तस्यकारणंहेतुम् अतिसन्मतिदमत्यन्तोत्तमबुद्धिप्रदायिनम् श्रीढुण्ढिराजम् श्रीढुण्ढिराजनाम्नाप्रसिद्धम् श्रीविश्वनाथस्यकनिष्ठम्पुत्रञ्जगत्पूज्यंश्रीगणेशम् ददर्श श्रद्धाभक्तिपूर्वकम् दृष्टवान् व० ३१

सम्पूज्येति प्राज्ञोविवेकशाली सः लक्ष्मीनारायणः उज्ज्वलतेजसन्तम् श्रीढुण्ढिराजम् सुगन्धिभिश्शोभनगन्धैः अतएव आप्तशोभैरतिसुन्दरैः सद्धूपदीपबलिभिः संवलितैस्सहकृतैः सुमैःपुष्पैःविधिवद्विधिपूर्वकम् सम्पूज्य प्रसन्नस्वान्तः प्रहृष्टमनाः नितान्तनतकन्धरस्सम्यङ्नम्रग्रीवश्चसन् इतिवक्ष्यमाणरीत्या अवादीदर्थादस्तौत् व. ॥ ३२ ॥

हे इति हेढुण्ढिराज तथा गिरिजायाःश्रीपार्वत्याः हृदयमेव अरविन्दङ्कमलम् तस्य आनन्दैकहेतुर्विकासकारणम् सुखैकनिदानमितियावत् वरःश्रेष्ठः भास्करस्सूर्यः तत्सम्बुद्धौ हेगिरिजाहृदयारविन्दानन्दैकहेतुवरभास्कर तथा सन्शोभनः करश्शुण्डादण्डः यस्य यद्वा सन्तः कराःकिरणाः यस्य तत्सम्बुद्धौ हेसत्कर तथा हे कारुण्यमन्दिर दयानिधान तथा पुरन्दरेण शक्रेण वन्दितौ अङ्घ्रीचरणौयस्य तत्सम्बुद्धौ हेपुरन्दरवन्दिताङ्घ्रे तथा हेसिन्दूरसुन्दरतनो सर्वाङ्गलिप्तसिन्दूरातिरमणीयशरीर सिन्दूरवदतिकमनीयदेह वा त्वम् नित्यंसर्वदा विजयस्व सर्वोत्कर्षेणवर्त्तस्वविजयस्वेत्यत्र विपराभ्योजेरित्यात्मनेपदम् ॥ ३३ ॥

त्वम्पीनविघ्नविनिवारण वारणास्य मीनध्वजारिसुत मां स्वहितेन हीनम् ।
दीनं विलीनमतिमूनगतिं नवीनप्राचीनदुष्कृतभृतम्परिपाह्यधीनम् ॥३४॥
भव्याधिदाऽङ्गकरभासित मोदकारिन् भव्याधिदाऽङ्गकरभासित मोदकारिन् ।
हारिन्नवद्यपरमव्यय मा दरापहारिन्नव द्य परम व्ययमादराप ॥ ३५ ॥

त्वमिति हेपीनविघ्नविनिवारण अतिपुष्टान्तरायहारिन् तथा हेवारणास्य हे-गजानन दन्तीदन्तावलोहस्तीद्विरदोऽनेकपोद्विपः मतङ्गजोगजोनागःकुञ्जरोवार-णःकरी इभस्स्तम्बेरमःपद्मीत्यमरः हेमीनध्वजारिसुतहेश्रीमहादेवात्मज माम् त्वम् परिपाहिसर्वतोरक्ष कीदृशंमाम् स्वहितेननिजेष्टेन हीनम् रहितम् पु. की. दीनम् सर्वथैव गर्वशून्यम् पु. की. विलीनमतिंनष्टबुद्धिम् पु. की. ऊनातुच्छा गतिर्ज्ञानम् यस्ययस्मिन्वा सऊनगतिस्तम् गतिर्मार्गेदशायाञ्चज्ञानेपात्राभ्युपाययोः नाडीव्रणसरण्याञ्चेतिविश्वप्रकाशः नवीनैरेतज्जन्मविहितैः प्राचीनैःपूर्वजन्मार्जि-तैः दुष्कृतैःपापैः अस्त्रीपङ्कम्पुमान्पाप्मापापङ्किल्विषकल्मषम् कलुषंवृजिनैनोऽघ-मंहोदुरितदुष्कृतमित्यमरः भृतम्पुष्टम् युक्तमितियावत् पु. की. अधीनम्परवशं-सर्वथाऽसमर्थमित्यर्थः च. ॥ ३४ ॥

भव्येति अङ्ग हे पाद्प्याद्अङ्गहैहेभोअयेइत्याद्यव्ययम् अधि अधिकन्ददातीत्य-धिदः अधिपूर्वात् डुदाञ्दानेइत्यस्माद्धातश्चोपसर्गेइतिकः भव्यस्य कल्याणस्य अधिदोऽधिकदाता तत्सम्बुद्धौ हेभव्याधिद तथा करस्यशुण्डादण्डस्य करःप्र-त्यायशुण्डयोः रश्मौवर्षोपलेपाणावितिहेमचन्द्रः या भाद्दीप्तिःतया सितोबद्धः षिञ्बन्धनेकर्म्मणिक्तः तत्सम्बुद्धौ हेकरभासित सितःसमासेधवलेनिबद्धज्ञान-योरपीतिविश्वप्रकाशः तथा हेमोदकारिन् भक्तजनानाम् हर्षविधायिन् तथा भ-वोजन्म अस्तियेषान्तेभविनःप्राणिनइत्यर्थः भवशब्दात् अतइनिठनावितीन् भवः-क्षेमेशसंसारेसत्तायाम्प्राप्तिजन्मनोरितिमेदिनी तेषाम् आधिमानसींव्यथाम् द्य-तिखण्डयतिनाशयतीतियावत् दोअवखण्डने आतोऽनुपसर्गेइतिकः तथाभूतः तत्सम्बुद्धौ हेभव्याधिद तथाच अङ्गस्यशरीरस्य अङ्गानामवयवानांवा कराःरश्मयः तैः भासितःप्रकाशितः तत्सम्बुद्धौ हेअङ्गकरभासित तथाच मोदकान् लोके ल-ड्डूइतिख्यातान् खाद्यपदार्थान् भक्तार्पितान् ऋच्छतिप्राप्नोतीतितच्छीलोमोद-कारी तत्सम्बुद्धौ हेमोदकारिन् ऋगतिप्रापणयोरित्यस्मात् सुप्यजातौणिनिस्ताच्छी-ल्यइतिणिनिः तथाच हेहारिन् मनोहर तथाच हे अव्यय हे अविनाशिन् तथाच दरंसाध्वसम् अपहरतीति दरापहारी ताच्छील्येणिनिः तत्सम्बुद्धौ हेदरापहारिन् दरोऽस्त्रीसाध्वसेगर्तेइतिमेदिनी तथाच हेपरमसर्वोत्कृष्ट तथाच आदरंसत्कारम् आप्नोतीति आदरापःआप्लव्याप्तौ कर्म्मण्यण् तत्सम्बुद्धौ हे आदराप अवद्यन्दो-षपवपर म्प्रधानंयस्मिन् तमवद्यपरम् दोषैकजुष्टमित्यर्थः मामाम् भवदेकपराय-णंलक्ष्मीनारायणम् अवत्वंरक्ष तथाच व्ययंमदीयंनाशम् द्यखण्डय निवारयेत्यर्थः

इत्यूढगूढरुचिरार्थविचारमुक्त्वा सद्भुक्तिमुक्तिदपदमुपदासमेतः ।
उत्कण्ठितः कृतजगत्त्रयहर्षवर्षामैक्षिष्ट रिष्टहरणीमयमन्नपूर्णाम् ॥ ३६ ॥
गन्धादिभिः सहजपाकुसुमोपहारै स्तस्या यथाविधि विधाय विधिस्तुतायाः ।
प्रीत्योचितामपचितिश्चतुरश्चमत्कृच्चञ्चच्चरित्रविततेरयमित्यशंसत् ॥३७॥
मातस्त्वमेव भुवनानि सदाविभर्षिस्तोमस्तुते यत इमानि सदा विभर्षि ।
एका ततो भृतबला भवती चकास्ति त्वत्तः परा सुकृतलाभवती च काऽस्ति ३८
त्वन्दैवतानि खलु दत्तमहे भवानि दैत्यार्दितानि परिपासि महेभवानि ।
शश्वत्सुखानि वहुपुण्यसमुद्भवानित्वद्दर्शनादहमवाप्यसमुद्भवानि ॥३९॥

जीवनमुक्तङ्कुर्वितियावत् त्वामौद्वितीयायाइतिमामित्यस्य मादेशः घेति दोअवखण्डने इत्यस्य लोटि मध्यमपुरुषैकवचनेरूपम् व. ॥ ३५ ॥

इतीति उत्कण्ठितःसञ्जातोत्कण्ठः उपदाभिः उपायनद्रव्यैःफलपक्वान्नादिभिः समेतोयुक्तः अयंलक्ष्मीनारायणः इतिपूर्वोक्तरीत्या ऊढोधृतः गूढोऽस्फुटः रुचिरःप्रशंसनीयः अर्थविचारः यस्मिन्कर्म्मणि तद्यथास्यात्तथा उक्त्वास्तुतिगर्भास्वाणीमादाय सतांश्रेष्ठानांस्वभक्तानाम् मुक्तिमुक्तिदे भोगमोक्षप्रदायिनी पदेचरणौयस्यास्सताम् कृतम् जगत्त्रयस्य हर्षवर्षमुद्वृष्टिर्ययाताम् रिष्टहरणीमशुभविनाशनीम् रिष्टङ्क्षेमाऽशुभाभावेष्वित्यमरः अन्नपूर्णामितन्नाम्नाप्रसिद्धान्देवीम् ऐक्षिष्टाऽद्राक्षीत् रिष्टहरणीमित्यत्र हृञ्हरणे कर्त्तरिल्युट् टित्वात् ङीप् व. ॥ ३६ ॥

गन्धादिभिरिति अयंलक्ष्मीनारायणः सहजपाकुसुमोपहारैरोण्ड्रपुष्पमाल्यवलिसहितैः गन्धादिभिः चमत्कृच्चमत्कारिणी चञ्चन्तीपरिस्फुरन्ती चरित्रविततिश्चरितपरम्परा यस्यास्तस्याः विधिस्तुतायाब्रह्मदेवनुतायाः तस्याअन्नपूर्णायादेव्याः उचितांयोग्याम् अपचितिम्पूजाम् यथाविधिविधिवत् विधायकृत्वा प्रीत्याहर्षातिरेकात् इतिवक्ष्यमाणेनप्रकारेण अशंसत्स्तौतिस्म व. ॥ ३७ ॥

मातरिति हेमातः तथा सतीसमीचीना आसमन्तात् विभादीप्तिः येषां यद्वा सतः अवतीतितच्छीलासदाविनीभादीप्तिर्येषाम् तेसदाविभाः तेचतेऋषयश्चतेषाम् स्तोमस्समूहः तेनस्तुता तत्सम्बुद्धौहेसदाविभर्षिस्तोमस्तुते यतोयस्मात्कारणात् त्वमेव इमानि चतुर्दश भुवनानिलोकान् सदासर्वदा विभर्षिदधासि पुष्णासिवाततस्तस्मात् भृतन्धृतम् बलंसामर्थ्यविशेषः ययासाएकामुख्या भवती चकास्तिशोभते तथाच त्वत्तःपराऽन्या सुकृतलाभवतीपुण्यप्राप्तिविशिष्टा का अस्ति नकापीत्यर्थः भवतीत्यत्र मातेंडवतुः उगितश्चेतिङीप् व.॥ ३८ ॥

त्वमिति दत्तोवितीर्णः महउत्सवः यया सा तथोक्ता तत्सम्बुद्धौ हेदत्तमहे तथाहेभवानिहेभवपत्नि भवानीत्यत्रइन्द्रवरुणभवशर्वेत्यादिनाऽऽनुक् उगितश्चेति ङीप् त्वम् दैत्यैरसुरैः अर्दितानिपीडितानि महान्तःपूज्यमानावृहतोवा ये इभाः

इत्यात्तकोमलपदावलिसोऽभिधायप्रोद्भासिभक्तिभरपूरितचित्तवृत्तिः ।
देवासुरप्रकरपूजितपत्पयोजामोजस्विनीम्भगवतीमनमन्मुदा ताम् ॥४०॥
नम्रोऽथपातकनिवृत्तमनास्सुवृत्तः सौवर्णमन्दिरनिवासिनमुत्सुकस्सन् ।
श्रीविश्वनाथमशुभापहराभिधानन्दृष्ट्वानिजे स नयने सुफलेऽधिमेने ॥४१॥
पुष्पैर्म्मनोरमतमैरतमास्तमीशंमन्दारजै स्स विरजा विधिवत्प्रशस्तैः ।
दीपावलीवलियुतैर्न्नवबिल्वपत्रैर्धूपैरुपेतविनयोभगवन्तमार्चीत् ॥ ४२ ॥

गजाः ऐरावतादयः तैः वान्तिगच्छन्तीतितानि महेभवानि वागतिगन्धनयोरि-त्यतः सुपिस्थइतिसूत्रे सुपीतियोगविभागात् कःप्रत्ययः दैवतानिदेवान् परिपासि-रक्षसि खल्वितिनिश्चये तथा अहम् त्वद्दर्शनात् बहुपुण्यसमुद्भवानिभूरिधर्म्मोत्प-न्नानिसुखानि अवाप्यलब्ध्वा शश्वत्सर्वदा समुत्सहर्षः भवानिभवेयम् व.॥३९॥

इतिति सः लक्ष्मीनारायणः इतिपूर्वोक्तप्रकारेण आत्तागृहीता उच्चारितेति-यावत् कोमलाऽतिमृदुलाक्षरा पादानांसुप्तिङन्तानाम् आवलिःपरम्परा पङ्क्ति-रितियावत् यस्मिन्कर्म्मणितत्तथा अभिधायस्तुत्वेत्यर्थः देवाश्चासुराश्च तेषाम् प्रकृष्टरुत्तमैः करैःपाणिभिःप्रकरैस्समूहैर्वापूजिते पत्पयोजेचरणकमलेयस्यास्ताम् ओजस्विनींसमृद्धतेजोबलाम् भगवतींषडैश्वर्य्याश्रिताम् तथाचोक्तम् उत्पत्तिम्प्र-लयञ्चैवभूतानामागतिङ्गतिम् वेत्तिविद्यामविद्याञ्चसवाच्योभगवानिति अन्यच्च ऐश्वर्य्यस्यसमग्रस्यधर्म्मस्ययशसःश्रियः ज्ञानवैराग्ययोश्चैवसमुदायोभगस्स्मृतइ-तिषडैश्वर्य्याणि तथाच भगंश्रीकाममाहात्म्यवीर्य्ययत्नार्कभूमिष्वित्यमरः ताम् अन्नपूर्णान्देवीम् मुदाप्रहर्षेण अनमत् प्रणमतिस्म कीदृशस्सः प्रकर्षेण उद्भासि-नाभक्तिभरेणभक्त्यतिशयेन पूरितासम्भृता चित्तवृत्तिर्यस्यसतथोक्तः व. ॥४०॥

नम्रइति अथ नम्रः सुस्वभावः नम्रग्रीवोवा पातकेभ्यस्संसारदुःखहेतुभ्यो नानाविधेभ्योदुरितेभ्यः निवृत्तमुपरतम् मनश्चित्तंयस्यसतथोक्तः तथा सुवृत्तः प्रशंसनीयचरितः सः लक्ष्मीनारायणः उत्सुकस्समुत्कण्ठितस्सन् सुवर्णस्येदंसौ-वर्णम् तस्येदमित्यण् तच्चतत् मन्दिरंसद्म तस्मिन् निवसतीतितच्छीलस्तम् अशु-भापहराभिधानममङ्गलविनाशिनामानम् श्रीविश्वनाथम् दृष्ट्वासमवलोक्य निजे-स्वकीयेनयनेलोचने सुफलेशोभनफले अधिमेने ज्ञातवान् ॥ ४१ ॥

पुष्पैरिति अतमास्तमोगुणरहितः विरजारजोगुणरहितः उपेतविनयःप्रश्रय-युक्तः सः लक्ष्मनारायणः मनोरमतमैरातिरम्यैः मन्दारजैरर्कसम्बन्धिभिः प्रशस्तै-र्निर्दोषत्वादत्युत्तमैः पुष्पैः तथा दीपानामावलीचबलिश्च ताभ्याम् युतैः नवबि-ल्वपत्रैर्नूतनबिल्वदलैः तथा धूपैः ईशंसर्वसमर्थम् तम् भगवन्तम् षडैश्वर्यसम्प-न्नम् श्रीविश्वनाथम् आर्चीदपूपुजत् व. ॥ ४२ ॥

बद्धाञ्जलिरिति अथ बद्धाञ्जलिस्सम्पुटीकृतकरद्वयः तौयुतावञ्जलिःपुमानि-

बद्धाञ्जलिस्तमथलोकपशोकहारङ्कारुण्यवारिधिमुदारमहीशहारम् ।
वेदोपगीतचरितम्परिपीनभाग्यस्तुष्टाव स स्वशरणागतदीनभाग्यः ॥४३॥
वागीश्वरोऽपि भवतो भवदुःखहारिन्किंवर्णयन्गुणगणान्नु तदन्तमेति ।
एतन्न वेद्मि न तथापि मनो मदीयन्त्वांस्तोतुमीश्वर गिरा वदनं युनक्ति॥४४॥
त्वन्निर्गुणोऽपि सगुणो विधिविष्णुरुद्रख्यातिम्प्रपद्यजगदेतदशेषमीश ।
शक्त्या यतस्सृजसि पासि च हंसि तस्माद्वेदोऽपि वेद न भवच्चरितं वयङ्के॥४५
एकस्त्वमेव भवभीतिनितान्तखिन्नस्वान्तस्वभक्तजनरक्षणदक्षबुद्धिः ।
इत्याशयाऽऽगतमनाथमुदारकीर्त्तेमाम्पाहिपाहिभगवन्ननुकम्पयाऽरम् ४६॥

त्यमरः परितः पीनम्पुष्टम् प्रबलमितियावत् भाग्यन्दैवम् यस्यसतथोक्तः सः लक्ष्मीनारायणः लोकान्पान्तिरक्षन्तीतिलोकपाः इन्द्रादयोदेवाः पारक्षणे आतोऽनुपसर्गेकः तेषाम् शोकम् हरतीतितथोक्तस्तम् हृञ्हरणे कर्मण्यण् अथच कारुण्यस्यकरुणायाः वारिधिस्समुद्रस्सतथोक्तस्तम् कारुण्यङ्करुणाघृणेत्यमरः उदारन्दातारंमहान्तंवा अथच अहीशहारंनागेन्द्रमालम् अथच वेदोपगीतचरितम् सकलनिगमोपगीतशरणागतरक्षणादिसुवृत्तम् तंश्रीविश्वनाथम् तुष्टावाऽस्तौत् तङ्कम् यःश्रीविश्वनाथः स्वशरणागतान् दीनान् जनान्भजतीतिसतथोक्तः भजसेवायाम् भजोण्विरितिण्विः प्रत्ययः अतउपधायाइतिदीर्घः अस्तीतिशेषः व.॥४३॥

वागीश्वरइति हेभवदुःखहारिन् स्वभक्तसंसारपीडानिवर्त्तक यद्वा हेभवहेमहादेव हेदुःखहारिन् इतिपदद्वयम् वागीश्वरोवृहस्पतिरपिभवतस्तवगुणगणान् वर्णयन्गायन्सन् तेषाम् भवद्गुणगणानाम् अन्तमवसानम् किम् एतिप्राप्नोति अपितुनैतीत्यर्थः नुइतिवितर्के अहम् एतन्नेवद्मीतिन किन्तु वेद्म्येवजानाम्येव तथापिहे ईश्वरसर्वसमर्थ मदीयंमनः त्वांश्रीमन्तम्भवन्तम् स्तोतुम्गिरावाचा वदनंमुखम् युनक्तियोजयति माम् तवस्तवनायप्रेरयतीतियावत् व. ॥४४॥

त्वमिति हेईशहेनाथश्रीविश्वेश्वर निर्गुणोऽपिसत्त्वादिगुणातीतोऽपि त्वम् सगुणस्सत्त्वादिगुणसहितस्सन् विधिविष्णुरुद्रख्यातिम् ब्रह्महरिहरसञ्ज्ञाम् प्रपद्यप्राप्य शक्त्यास्वमायया एतदशेषंसकलम् जगत् भुवनमण्डलम् सृजसिनिर्म्मासि तथा पासिरक्षसि तथा हंसिनाशयसि तस्मात् वेदोऽपि भवच्चरितन्त्वच्चरित्रम् नवेदस्वरूपतस्साकल्येनच नजानाति ततः वयंमानवाः केस्मः नकेऽपीतिभावः व. ॥ ४५ ॥

एकइति उदारामहती कीर्त्तिर्यशोयस्यसः तत्सम्बुद्धौ हेउदारकीर्त्ते तथा हेभगवन् एकोमुख्यः त्वमेव भवेसंसारे भवाद्वा याभीतिर्भयम् तया नितान्तमत्यन्तम् खिन्नंविषण्णं स्वान्तंमनोयेषाम् एवम्भूतायेस्वभक्ताःतेषाम् रक्षणेरक्षायाम् दक्षा बुद्धिर्यस्य एवम्भूतोऽसि इत्याशयेनेतिमनोरथेन इत्याशया वा आगतम-

जय जय जगदीशाऽऽनन्दिसद्वन्दिताङ्घ्रे शिव शिवद मदीयं मोहसन्दोहमुच्चैः।
हर हर करुणाब्धे त्वं शरण्य स्मरारे भव भव भवभीतिव्यूहविच्छेदकारी ।४७।
क्षमस्वाऽपराधं मदीयन्दयालो कृतङ्कर्मणा चेतसा वा गिरा त्वम् ।
महामोहविध्वंसहेतो महस्विन्नहं नाथ वन्देऽतिमन्दो भवन्तम् ।।४८।।
इतिकृतनुतिरेषप्राप्तहर्षप्रकर्षोवहुविधजगदंहोभारसंहारिवारिम् ।
समसमुचितरम्यावद्धसोपानगम्यांविहितहितविचारोज्ञानवापीन्ददर्श।४९।

नाथंमाम् त्वम् अनुकम्पयानिरुपाधिकयाकरुणया अरम् शीघ्रम् यद्वा रलयो-स्सावर्ण्यात् अलमत्यन्तम् पाहिपाहिरक्षरक्ष वीप्सायान्द्वित्वम् च. ॥ ४६ ॥

जयेति हेजगदीश तथा आनन्दोऽस्तियेषान्तेयद्वा आनन्दयन्तीतितेतच्छीलाः तेचतेसन्तोमहात्मानोजनाः तैः वन्दितौ अङ्घ्रीपादौयस्यसःयद्वा आनन्दितौस-द्वन्दितौ अङ्घ्रीयस्यसः तत्सम्बुद्धौहेआनन्दिसद्वन्दिताङ्घ्रे यद्वा आनन्दिनौ स-मर्चनादानन्ददायिनौ अतएव सन्तौश्रेष्ठौ अतएव वन्दितौ अङ्घ्रीयस्यतत्सम्बुद्धौ तथा हेशिवमङ्गलस्वरूप हेशिवदकल्याणदायिन् तथाहेहर हेकरुणाब्धेहेकृपा-पारावारतथा हेशरण्यशरणागतजनरक्षणसाधो तथा हेस्मरारेकन्दर्पदर्प्पविनः-शक तथा हेभवहेशङ्कर त्वम् जयजयसर्वोत्कृष्टतयावर्त्तस्ववीप्सायान्द्विरुक्तिः तथा मदीयंमत्सम्बन्धिनम् उच्चैर्महान्तम् मोहस्याऽविवेकस्य सन्दोहंसमूहम् हर-नाशय विवेकशालिनंमांविधेहीत्यर्थ तथा भवेभवाद्वा यामीतित्रासः तस्याः व्यूहः समूहः तस्य विच्छेदकारी नाशकारकोभव एधि मालिनीच्छन्दः वा. नन-मयययुतेयंमालिनीभोगिलोकैरितिलक्षणात् ॥ ४७ ॥

क्षमस्वेति हेदयालो हेमहामोहविध्वंसहेतो हेमहस्विन् हेतेजस्विन् हेनाथ त्वम् कर्मणाचेतसागिराचकृतम् मदीयम् अपराधंमन्तुम् क्षमस्व तथा अतिम-न्दोऽतिमूढोऽहम् भवन्तम्भगवन्तम् वन्देनमामिस्तौमिवा भुजङ्गप्रयातञ्छन्दः वाग्वल्लभे चतुर्भिर्यकारैर्भुजङ्गप्रयातमितिलक्षणात् ॥ ४८॥

इतीति इतिपूर्वोक्तरीत्या कृता नुतिस्स्तुतिर्येनसः प्राप्तोलब्धोहर्षस्यप्रमोद-स्यप्रकर्षोऽतिशयोयेनसः विहितःकृतः हितस्यशुभकारिणःकर्मणः विचारोयेनसः यद्वा विहितः हितोऽनुकूलः विचारःसञ्चारोयेनसः हितविहारइतिपाठेप्ययमेवार्थः एषःप्रक्रान्तः लक्ष्मीनारायणः बहुविधानिनानाप्रकाराणि जगताम् अहांसिपापानि तेषाम्भारम् संहरतीतितच्छीलम् वारिजलम् यस्यास्ताम्समैरविषमैः समुचि-तैर्योग्यैः रम्यैर्दर्शनीयैः आसमन्तात् बद्धैस्सुघटितैः सोपानैरारोहणैः लोकेसी-ढीतिप्रसिद्धैः गम्यामन्तःप्रवेशार्हाम् ज्ञानवापीम् एतन्नाम्ना वाराणस्यामतिप्रसि-द्धंमहामाहात्म्यम् तीर्थविशेषम् ददर्शपश्यतिस्म आरोहणंस्यात्सोपानमित्यमरः मालिनीच्छन्दः ॥ ४९ ॥

अथसरजनीस्तिस्रोनीत्वाविनीतमतिर्म्मतः
परमसुकृतीवाराणस्यांवसन्सुखितस्ततः ।
जगतिविदितंपुण्यङ्गुण्याग्रणीर्धरणीसुर
स्सुरगणनुतन्दृश्यन्तीर्थङ्गयाख्यमयान्मुदा ॥५०॥
तत्राऽधोक्षजपादपद्ममखिलाभीष्टप्रदङ्कल्मष
स्तोमध्वंसनतत्परं सुरनरैरासेवितंरागतः ।
सद्भावस्सनिरीक्ष्यमङ्गलमयङ्कीनाशभीनाशन
म्प्रापस्तापहरन्ततस्स्मरहरंश्रीवैद्यनाथाभिधम् ॥५१॥
श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्श्रीदेविप्रसादकविनाविहितेनिबन्धे ।
सर्गस्समाप्तिमगमद्रमणीयलक्ष्मीनारायणीयचरितेऽत्रतृतीयएषः ।५२॥
इति श्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जनशर्म्मात्मजकविवरदेवि-
प्रसादनिर्म्मितेकौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणजीवनचरिता-
त्मकेमङ्गलाङ्के लक्ष्मीनारायणकाव्ये तृतीयस्सर्गः ॥ ३ ॥

अथेति अथज्ञानवापीदर्शनानन्तरम् विनीतमतिश्शिक्षितबुद्धिः मतइष्टः सताामितिशेषः परमसुकृतीबहुपुण्यशाली सुखितस्सञ्जातसुखः प्रसन्नहृदयइत्यर्थः गुण्यानागुणवताम् अग्रणीर्म्मुख्यःसपूर्वोक्तः धरणीसुरः लक्ष्मीनारायणः वाराणस्यांश्रीकाश्याम् वसन्सान्तिस्रः रजनीरात्रीः नीत्वा ततःतस्यावाराणस्याः सकाशात् जगतिलोके विदितम्प्रसिद्धम्पुण्यमतिपवित्रम् सुरगणनुतम् इन्द्रादिदेवसमूहाभिष्टुतम् दृश्यंरम्यम् दर्शनीयंवा गयाख्यङ्गयानामकम् तीर्थम् मुदाप्रीत्या अयादगच्छत् हरिणीछन्दः वा. ब. नसमरसलागःषड्वेदैर्हयैर्हरिणीमतेतिलक्षणात् ॥५०॥

तत्रेति सन्साधुः भावोभक्तिर्यस्यसतथोक्तःसः लक्ष्मीनारायणः तत्रगयातीर्थे अखिलाभीष्टप्रदंसर्वकामप्रदायिनम् कीनाशाद्यमात् याभीर्भयम् तस्याः नाशनंनाशकारणम् तापानामाध्यात्मिकादीनान्दुःखानाम् हरंनाशकम् श्रीवैद्यनाथइत्यभिधानामयस्यसतम् स्मरहरंश्रीमहादेवम् प्रापत् प्राप्नोतिस्म अन्यत्स्पष्टम् कृतान्तेपुंसिकीनाशःक्षुद्रकर्षकयोस्त्रिष्वित्यमरः नाशनमित्यत्र कर्त्तरिल्युट् प्रापदित्यत्र आप्लृव्याप्तौ कर्त्तरि लुङ् पुषादिद्युताद्य्लृदितइत्यादिनाअङ् शार्दूलविक्रीडितच्छन्दः ॥ ५१ ॥

श्रीति एषः तृतीयस्सर्गस्समाप्तिम्परिपूर्णताम् अगमदगच्छत् अन्यत्सर्वम्पूर्वंव्याख्यातम् वसन्ततिलकाछन्दः लक्षणन्तूक्तम्पूर्वम् ॥ ५२ ॥

इति श्रीस्वकृतस्य कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणजीवनचरितात्मकस्य लक्ष्मीनारायणकाव्यस्य सुमङ्गलाख्यायां व्याख्यायाम् तृतीयःसर्गस्समाप्तः ॥३॥

# अथ चतुर्थस्सर्गः ।

अथपयोनिधिमुत्तममुत्तमस्समहितोमहितोधृतकौतुकः ।
घनसमानसमाकलितध्वनिम्परमसारमसावलमैक्षत ॥ १ ॥
मकरमीनकुलाकुलमुज्ज्वलद्बहुलरत्नमरीचिभिरश्चितम् ।
अतिविभासितमाहितसद्विभावसुतरंसुतरङ्गयुतंनुतम् ॥ २ ॥

अथेति अथश्रीवैद्यनाथाभिधश्रीमहादेवदर्शनानन्तरम् उत्तमानिर्व्याजा मुत् हर्षोयस्ययस्मिन्वा सउत्तममुत् अतिशयेन उत्तममुत् सउत्तममुत्तमः समेभ्यस्सर्वेभ्योजनेभ्यःहितोऽनुकूलः यद्वा समोऽविषमः अतएवहितः महितःपूजितः सञ्जातोत्सवोवा महउद्धवउत्सवइत्यमरः तस्मात्तारकादित्वादितच्प्रत्ययः धृतम् कौतुकन्दर्शनाभिलाषः उत्सवः कुतूहलंवायेनसतथोक्तः कौतुकन्त्वभिलाषेस्यादुत्सेवनर्म्महर्षयोः तथापरम्परायातमङ्गलेचकुतूहले विवाहसूत्रेगीतादिभोगयोरपिनद्वयोरितिमेदिनी असौलक्ष्मीनारायणः घनेनमेघेनसमानस्तुल्यः समाकलितोविहितः ध्वनिश्शब्दः गर्जनमितियावत् येनसःतम् यद्वा घनसमानोनीलवर्णत्वान्मेघसदृशःसचासौसमाकलितध्वनिर्विहितगर्जनः सतम् परमउत्कृष्टः सारस्स्थिरांशोनानाविधरत्नादिरूपः वलंवा नानाविधन्धनंवायस्ययस्मिन्वासतम् सारोवलेस्थिरांशेचमज्जनपुंसिजलेधने न्याय्येक्लीवन्त्रिषुवरेसान्द्रंवनेघट्टेमृदावितिमेदिनी पयोनिधिंसमुद्रम् अलमत्यर्थम् ऐक्षतावालोकत उत्तममुत्तमइत्यत्र अतिशायनेतमविष्ठनावितितमप्प्रत्ययः महितइत्यत्र महपूजायाम् कर्म्मणिक्तः पक्षान्तरे महशब्दात्इतच् ऐक्षतेत्यत्र ईक्षदर्शनाङ्कनयोः कर्त्तरिलङ् द्रुतविलम्बितञ्छन्दः तल्लक्षणन्तूक्तम् द्रुतविलम्बितमाहनभौभरावितिवाग्वल्लभे ॥ १ ॥

अथषड्भिःश्लोकैस्समुद्रंविशिनष्टि मकरेति कीदृशम्पयोनिधिम् मकराश्चमीनाश्च तेषाम् कुलैर्गणैः कुलञ्जनपदेगोत्रसजातीयगणेष्वपि भवनेचतनौक्लीवङ्कण्टकार्यौपधौकुलीतिमेदिनी आकुलंव्याप्तम् पु. की. उज्ज्वलन्तः उच्चैःप्रकाशमानाः वहुलाः रत्नानांनानाविधानांमणीनाम् मरीचयःकिरणाः तैः अश्चितम्पूजितम् शोभितमितियावत् पु. की. अतिविभासितस्वद्बहुप्रकाशितम् पु. की. आहितस्स्वस्मिन्स्थापितः सन् विभावसुर्वाडवाग्निर्येनसः अतिशयेनआहितसद्विभावसुरित्याहितसद्विभावसुतरस्तम् द्विवचनाविभज्योपपदेतरवीयसुनावितितर प्रत्ययः पु. की. सुशोभनतायेतरङ्गास्तैर्युतम् पु. की. नुतस्तुतम् कविभिरितिशेषः यद्वा नुइतिवितर्के तस्प्रसिद्धम् पयोनिधिम् ऐक्षतेतिपूर्वेणान्वयः एवमेयाग्रेऽपि छन्दस्तदेवबोध्यम् ॥ २ ॥

५

प्रविचलत्सलिलोत्थितसंलसद्भुजगराजफणामणिरञ्जितम् ।
त्रिपथगादिनदीजलसम्भृतन्धरचितंरचितंसगरात्मजैः ॥ ३ ॥
उदकपानविधायिबृहद्बलाहकततिद्युतिदीपितमायतम् ।
तटगविद्रुमराजिविराजितं न समलंसमलंकृतभूतलम् ॥ ४ ॥
गुरुगभीरमलङ्घ्यमनारतोच्छलितवीचिनिरस्तसुमौक्तिकैः ।
विहितकूलरुचंशुचितापभाग्वरुणदारुणदाहविनाशिनम् ॥ ५ ॥
विशदफेनविकाशितमुत्तरत्तरलनीरपतत्रिविचित्रितम् ।
गलिततालफलाश्रितसैकतार्जितरुचिन्तरुचिह्नितरोधसम् ॥ ६ ॥

प्रविचलेदिति पु. की. प्राविचलन्तः प्रकर्षेणविशेषेण सर्प्पन्तः सलिलाज्ज-लात् उत्थिताउन्मग्नाःसंलसन्तःशोभमानाः क्रीडन्तोवा येभुजगराजाः सर्प्पप्र-वराः राजाहस्सखिभ्यष्टच् इतिटच् तेषाम् फणासु येमणयस्तैरञ्जितंशोभितम् नानावर्णीकृतम् पु. की. त्रिपथगादयःश्रीगङ्गादयः यानद्यः तासाम् जलैः सम्भृ-तम्परिपूरितम् पु. की. धरैर्म्मैनाकादिभिःपर्वतैः महीध्रेशिखरिक्ष्माभृदहार्य्यधरप-र्वताः अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाइत्यमरः चितंव्याप्तम् चिञ्चयने कर्म्मणिक्तः पु. की. सगरोनाम सूर्यवंशीयोमहाप्रसिद्धोमहाराजः तस्यआत्मजैः-पुत्रैः रचितंनिर्म्मितम् ॥ ३ ॥

उदकेति पुनःकीदृशम् उदकपानविधायिनोजलादानतत्पराः बृहतोमहान्तः येबलाहकामेघाः तेषाम् ततेःपरम्परायाः द्युत्याशोभया दीपितंशोभितम् पु. की. आयतंविस्तृतम् पु. की. तटगास्तीरगताः येविद्रुमाःप्रवालाः मुङ्गाइतिलोकेप्रसि-द्धाः विद्रुमोरत्नवृक्षेऽपिप्रवालेऽपिपुमानयमितिमेदिनी तेषाम् राज्यापङ्क्त्या विराजितम् पु. की. नसमलंमलेनसहितंन सहसुपेतिसमासः पु. की. सम्यक् अलङ्कृतम्भूषितम् भूतलंयेनसतम् ॥ ४ ॥

गुर्विति पु. की. गुरुगभीरमत्यगाधम् पु. की. अलङ्घ्यमसुतरम् पु. की. अनारतंनिरन्तरम् उच्छलिताभिर्वीचिभिः निरस्तैर्बहिःप्रक्षिप्तैः सुमौक्तिकैश्शो-भनमुक्ताफलैः करणभूतैः विहिताकृता कूलरुक्तीरशोभायेनयस्यवासतम् पु. की शुचिर्वडवानलोऽर्थादेव ग्रीष्मर्तुर्वा शुचिश्शुद्धेऽनुपहतेश्शृङ्गाराषाढयो-स्सिते ग्रीष्मेहुतवहेऽपिस्यादुपधाशुद्धमन्त्रिणीतिविश्वप्रकाशः तस्मात्तस्यवातेन-घापक्षान्तरेच तस्मिन् यः तापःतम्भजतीतिशुचितापभाग् सचासौवरुण स्तस्य दारुणङ्कठिनम् दाहम् विनाशयतीति तच्छीलम् ॥ ५ ॥

विशदेति पुनः की. विशदैरतिशुभ्रैः फेनैर्हिण्डीरैः विकाशितमतिशोभमानम् पु. की. उत्तरन्तःप्लवमानाः तरलास्स्वभावचञ्चलाः ये नीरपतत्रिणोजलपक्षिणः कारण्डवादयःतैः विचित्रितंविविधवर्णीकृतम् सञ्जातचित्रंवा आश्चर्यमयीकृतंवा

चपलताललितोत्पतदम्बुभूकरिकरेरितशीतलशीकरैः ।
प्रकटितोरुहिमागमनश्रियम्परमुदारमुदाशयनायकम् ॥ ७ ॥
सइतिसंशयमापदवेक्ष्यतङ्किमयमन्तरिताचलपक्षतीः ।
बहुविभर्त्तिजलेप्रतिबिम्बितास्तरुततीरुततीररुहस्स्फुटम् ॥ ८ ॥
अधिकरम्यतयाविबुधालयञ्जयतियाजगदीशपुरीं स ताम् ।
गुरुदयालुसुतस्यजनस्तुतान्धृतनयस्तनयस्समगात्ततः ॥ ९ ॥
अथसतत्रपतत्रिपतिश्रितध्वजमलोकतलोकतमोनुदम् ।
स्वजनपालनकृत्प्रकृतिङ्कृतीसमुदितंमुदितञ्जगदीश्वरम् ॥ १० ॥

पु. की. गलितान्यधःपतितानि यानितालफलानि तैराश्रितंव्याप्तम् आङ्पूर्वात् श्रिञ्सेवायामित्यस्माद्धातोः कर्म्मणिक्तः यत् सैकतम् सिकतामयस्तटप्रदेशः तेन अञ्चितासम्पादिता रुचिश्शोभायस्यसतम् फलश्रितसैकताञ्चितमितिपाठे फलानि श्रितम् फलाश्रितमिति द्वितीयाश्रितातीतेत्यादिनासमासः पु. की. तरुभिर्नानाविधैर्वृक्षैः चिह्नितंललितम् रोधस्तीरप्रदेशः यस्यसतम् ॥ ६ ॥

चपलतेति पु. की. चपलतयाचञ्चलतयाललिताविलसिताः उत्पतन्तउन्मज्जन्तः ये अम्बुभुवोजलजाः करिणोगजाः यादोविशेषाइतियावत् तेषाम् करैश्शुण्डादण्डैः ईरितास्सर्वतःप्रक्षिप्ताः ये शीतलाश्शीकराः जलकणाः तैः करणभूतैः प्रकटिता उरुर्म्महती हिमागमनश्रीःहेमन्तशोभायेनतम् पु. की. परमुत्कृष्टम् पु. की. उदारंमहान्तम् पु. की. उदाशयानांनद्यादीनाञ्जलाशयानाम् नायकम् तेषुमुख्यमितियावत् ॥ ७ ॥

सइति सलक्ष्मीनारायणः तंसमुद्रमवेक्ष्यदृष्ट्वाअयम् समुद्रः अन्तरितानांस्वमध्यस्थानाम् अचलानाम्पर्वतानाम् पक्षतीःपक्षमूलानि बहुयथातथा स्फुटंयथातथा विभर्त्तिकिम् उतवितर्के तीररुहस्तटोद्भवाः जलेप्रतिबिम्बिताः तरुततीर्वृक्षपरम्पराः विभर्त्ति इतिसंशयमापत् प्राप्तवान् ॥ ८ ॥

अधिकेति ततः याजगदीशपुरी अधिकरम्यतयाऽतिरुचिरत्वेन विबुधालयंस्वर्गममरावतींवा जयति अधःकरोति सपूर्वोक्तः गुरुदयालुसुतस्यश्रीहजूरिनाम्नः तनयःसूनुर्लक्ष्मीनारायणः जनैस्सर्वैःलोकैः स्तुताम् ताम् जगदीशस्यश्रीजगन्नाथेतिप्रसिद्धस्यश्रीविष्णोः पुरीन्नगरीम् समगात् प्रापत् कीदृशस्सः धृतोनयोनीतिर्येन सतथोक्तः विवेकशालीत्यर्थः समगादित्यत्र सम्पूर्वादिणगतावित्यस्मात् कर्त्तरिलुङ् इणोगालुङीतिगादेशः ॥ ९ ॥

अथेति अथजगदीशपुरीप्राप्त्यनन्तरम् कृतीकुशलः सः लक्ष्मीनारायणः तत्रतस्याञ्जगदीशपुर्य्याम् पतत्रिपतिनापक्षिराजेनगरुडेन श्रितः यद्वा तंश्रितः ध्वजो यस्यसतम् अथच लोकानांसेवकजनानाम् तमोनुदमज्ञानान्धकारविनाशकम्

विविधवर्णमणिप्रकरोल्लसन्मुकुटमण्डितमुज्ज्वलकुण्डलम् ।
कमलकान्तदृशं सदृशप्रभं रविजयाविजयार्ज्जितसत्कृतिम् ॥ ११ ॥
सुरसमूहसमीडितमिन्दिराकरनिपीडितपादसरोरुहम् ।
असुहरम्परिपूज्य तदा भृशं समुमुदेऽमुमुदेजयरक्षसाम् ॥ १२ ॥
सविनयं विनिबद्धशुभाञ्जलिः कलिकलाकलनोज्झितमानसः ।
अलपदित्यनुकूलयितुन्ततः सनतिमानतिमानमितं हरिम् ॥ १३ ॥

स्वजनपालनकृत् निजजनरक्षणकारिणी प्रकृतिः स्वभावो यस्य सतम् प्रकृतिर्योनि-शिल्पिनोः पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोरिति हेमचन्द्रः सम्यक् उदित-मुदयमितम् मुदितम्प्रसन्नम् जगदीश्वरञ्जगन्नाथम् अलोकत अपश्यत् लोकृ दर्शने कर्त्तरि लङ् ॥ १० ॥

तमेव विशिनष्टि विविधेति कीदृशञ्जगदीश्वरम् विविधानानाप्रकारा ये मणयो-रत्नानि तेषाम् प्रकरेण समूहेन उल्लसदतिभास्वत् यत् मुकुटङ्किरीटम् तेन मण्डि-तम्भूषितम् पु. की. उज्ज्वलप्रकाशमाने कुण्डले कर्णभूषणविशेषौ यस्य सतम् पु. की. कमलवत् कान्तमनोहरे दृशौ नेत्रे यस्य सतम् पु. की. रविजया सूर्यपुत्र्या श्री-यमुनया सदृशी समाना श्यामा प्रभा दीप्तिर्यस्य सतम् पु. की. विजयेन अर्थात्सर्व-लोकस्य अर्ज्जिता सम्पादिता सत्कृतिस्सत्कारः प्रतिष्ठा यस्य येन वा सतम् ॥ ११ ॥

सुरेति सः लक्ष्मीनारायणः सुराणां समूहेन समीडितस्स्तुतस्तम् इन्दिराया-लक्ष्म्याः कराभ्याम् निपीडिते संवाहिते पादसरोरुहे चरणकमले यस्य सतम् उदु-श्चैरत्यन्तमित्यर्थः एजयन्ति सुरान् कम्पयन्तीत्युदेजयानि एजृ कम्पने असात्खश् शिखाच्छबादिः तानि चतानि रक्षांसि राक्षसाः तेषाम् असुहरम्प्राणहारिणम् अमु-ञ्जगदीश्वरम् परिपूज्य तदा भृशमतीव मुमुदे जहर्ष मुमुदे इति मुद हर्षे कर्त्तरि लिट् ॥ १२ ॥

सविनयमिति ततः कलेः कलियुगस्य कलानां नानाविधदुर्व्यापारलक्षणाना-ङ्कर्मणाम् आकलनेनानुसारणेन उज्झितन्त्यक्तम् मानसमन्तःकरणं यस्य सतथोक्तः विनिबद्धस्सुघटितः शुभश्शुभकारी अञ्जलिः परस्परमिलितङ्करद्वयं यस्य येन वा स-तथोक्तः तौ युतावञ्जलिः पुमानित्यमरः नतिमान्नम्रशिराः सः लक्ष्मीनारायणः अति-मानम्बहुसत्कारम् अत्यन्तचित्तसमुन्नतिम्वा इतम्प्राप्तम् हरिं श्रीजगन्नाथम् अनु-कूलयितु मनुकूलङ्कर्त्तुम् सविनयं यथा स्यात्तथा इति वक्ष्यमाणरीत्या अलपदस्तौत् अनुकूलयितुमित्यत्र तुमुन्ण्वुलौ क्रियायाङ्क्रियार्थायामिति तुमुन् अलपदिति ल-पव्यक्तायांवाचि ततः कर्त्तरि लङ् ॥ १३ ॥

हतवतीति हे जगदीश्वर जगत्प्रभो दुःखदाँल्लोकोपद्रवकारिणः दितिसुतान्दै-त्यान् हतवता अवतारवता मत्स्यादिरूपधारिणा प्रभवता प्रभुणा अवतारक्षकेण

हतवताजगदीश्वरसाधवोबहुसुखङ्गमितानुदुःखदान् ।
दितिसुतानवतारवताऽवताप्रभवताभवताभवतापिताः ॥ १४ ॥
विपुलमीनशरीरधरेणकिंनभगवन्दनुजेनविलुण्ठिताः ।
समितितंविनिहत्यसुरक्षितामतिमतातिमताःश्रुतयस्त्वया ॥ १५ ॥
कठिनकच्छपरूपधरोभवान्विजयतेकिलयेनसमन्दरः ।
परिधृतस्सुरसासुरसात्कृतानवसुधावसुधावनतत्पर ॥ १६ ॥
त्वामयिनाथययादितिजंरुषा समवधीर्धरणीमरमुद्धरन् ।
मदघमप्रतयास्फुटमुत्कटन्दहवराहवराहवराजित ॥ १७ ॥

भवतात्वया भवतापितास्संसारजसन्तापयुक्तास्साधवोमहात्मानः बहुसुखम् गमिताःप्रापिताः हतवतेत्यत्र हन्हिंसागत्योरित्यतः निष्ठाक्तवतुः अनुदात्तोपदेशेत्यादिनानलोपः अवतारवतेत्यत्रअवपूर्वात् तृप्लवनसन्तरणयोरित्यतः अवतृस्त्रोर्घञ्इतिघञ् पश्चात् तदस्यास्त्यस्मिन्निति मतुप् इतिमतुप् मादुपधायाश्चमतोर्वोऽयवादिभ्यइतिमस्यवः गमिताइत्यत्र णिजन्ताद्गमधातोः कर्म्मणिक्तः निष्ठायांसेटीतिणिचोलोपः प्रभवतेत्यत्र प्रपूर्वाद्भूधातोः लटश्शात्रितिशतृप्रत्ययः अवतेत्यत्र अवरक्षणेइत्यतः लटश्शात्रितिशतृप्रत्ययः ॥ १४ ॥

अतःपरम् दशभिः श्लोकैर्दशावतारान् वर्णयति ॥

विपुलेति हेभगवन् मतिमता विपुलम्बृहत्यत् मीनशरीरम् मत्स्यतनुः तस्यधरेण धारकेण त्वया अतिमताबहुमानिताः दनुजेनदानवेन विलुण्ठिताश्चोरिताः श्रुतयोवेदाः समितिसङ्ग्रामे तन्दनुजम् विनिहत्यहत्वाकिन्नसुरक्षिताअपितुसुरक्षिताएव विनिहत्येत्यत्र विनिपूर्वात् हन्हिंसागत्योरित्यतः समानकर्त्तृकयोःपूर्वकाले इतिक्त्वा समासेनञ्पूर्वात्क्त्वोल्यबितिल्यप् वाल्यपीतिनलोपः ह्रस्वस्यपितिकितितुगितितुक् मतिमताइत्यत्र प्रशंसार्थेमतुप् ॥ १५ ॥

कठिनेति हेवसुधावनतत्परभूमिरक्षणदत्तैकचित्त येन भवता सः प्रसिद्धः मन्दरः पर्वतविशेषः परिधृतः तथा सुरसा शोभनः रसआस्वादः यस्याः यस्यांवासा नवसुधानवीनामृतम् सुरसात्कृतादेवाधीनादत्ताकृता तदधीनेवचनेदेयेत्राच इतिसातिःप्रत्ययः सः कठिनकच्छपरूपधरः कठोरकूर्मतनुधारी भवान् विजयते जिजिये विपराभ्याञ्जेरितितङ् ॥ १६ ॥

त्वमिति अयिहेनाथ हेवराह श्रेष्ठसूकररूपधर हेवराहवराजित प्रचण्डयुद्धशोभित यद्वा हेवराहवर तथा आहवंरातिददातीति तत्सम्बोधनम् हेआहवर हेयुद्धप्रद तथा हेअजित शत्रुकर्त्तृकस्वपराजयविरहित त्वम् धरणीम्भुवम् उद्धरन्सन् पातालादितिशेषः यया रुषाक्रोधेन दितिजंहिरण्याक्षंमहासुरम् अरंशीघ्रम् अवधीर्हतवान्हन्हिंसागत्योरित्यतः कर्त्तरि लुङ्लुङिचेतिवधादेशः तया रुषा अद्यापि

अमरवैरिकठोरतरस्फुरद्वृहदुरस्स्थलदारणकारिणः ।
अरुणिता रुधिरेणजयन्तितेघनखरानखरानरकेसरिन् ॥ १८ ॥
जयतिसानुवामनताङ्गतातवतनुर्जनमानसमोहिनी ।
दनुजवञ्चनचुञ्चुरुदञ्चिताऽतिवलिनाबलिनाकमलापते ॥ १९ ॥
जलधिजाहृदयप्रियरेणुकासुतइतिप्रथितोद्विजविद्विषः ।
अवनिपानवधीद्बहुशोभवान्सपरशुःपरशुभ्रविभोविभो ॥ २० ॥
दशरथाभिधभूपतनूजतान्त्वमभिपद्यसपद्यसदन्तकृत् ।
जनकजाऽनुजयुङ्मुदमत्यजोविपिनगोऽपिनगोद्विजदुःखहृत् ॥ २१ ॥

नीम् उत्कटमतिप्रचण्डम् मदघंममदुःखम् पापंवास्फुटंयथास्यात्तथा दहभस्मीकुरु यद्वा स्फुटामति अघविशेषणम् दह भस्मीकरणेकर्त्तरिलोट् ॥ १७ ॥

अमरेति हेनरकेसरिन् नृसिंहावतार तेतव नखरानखाः जयन्ति कीदृशाः अमरवैरिणोहिरण्यकशिपोः यत् कठोरतरमतिकठिनम् स्फुरत्प्रकाशमानम् बलातिरेकात् स्फुरणङ्कुर्वद्वा वृहद्विशालम्उरस्थलंवक्षस्स्थलम् तस्य दारणम्मोटनम् कुर्वन्तीतितच्छीलाः पुनःकीदृशाः रुधिरेणहिरण्यकशिपुवक्षोविदारणजेनरक्तेन अरुणितास्सञ्जातरागाः रक्तीकृतावा ॥ १८ ॥

जयतीति हेकमलापते सातेतवतनुःशरीरम् जयति कीदृशीतनुः वामनताम् गताखर्वताम् प्राप्ता पु. कीदृशी जनानाम् द्रष्टृणांलोकानाम् मानसञ्चित्तम् मोहयतितच्छीला पु. की. दनुजानान्दानवानाम् वञ्चनेनप्रतारणेन वित्ताप्रसिद्धेतिदनुजवञ्चनचुञ्चुः पु. की. अतिवलिनाबलवत्तरेणबलिनाबलिनामधेयेनविरोचनपुत्रेणमहासुरेण उत् उच्चैः अतिभक्त्यत्यर्थः अञ्चितापूजिता ॥ १९ ॥

जलधिजेति हेजलधिजाहृदयप्रिय श्रीलक्ष्मीमानसप्रीतिविषय हेविभोहेप्रभो भवान् रेणुकायाः जगदग्निनामकमुनिप्रवरधर्म्मपत्न्याः सुतःपुत्रः जामदग्न्यः परशुरामइतियावत् इतिप्रथितःप्रसिद्धः सन् द्विजविद्विषः ब्राह्मणविरोधिनः अवनिपान् राज्ञः बहुशोबहुवारम् एकविंशतिवारमितियावत् अवधीत् कीदृशोभवान् सपरशुः परशुनापरश्वधेनसहितः पु. की. परासर्वोत्कृष्टा शुभ्रासमुज्ज्वला विभादीप्तिः यस्य सतथोक्तः परशुद्धविभोविभोइतिपाठेऽप्ययमेवार्थः ॥ २० ॥

दशरथेति गौर्भूमिः गावोधेनवश्च द्विजाब्राह्मणाश्च तेषाम् दुःखम् हरतीति तत्सम्बुद्धौ हेगोद्विजदुःखहृत् तथा सपदिशीघ्रमेव असतान्दुष्टानाम् अन्तंविनाशम् करोतीतितत्सम्बुद्धौ हेसपद्यसदन्तकृत् त्वम् दशरथाभिधस्यदशरथनाम्नः भूपस्यराज्ञः तनूजतामात्मजत्वम् अभिपद्यप्राप्य विपिनगोऽप्यरण्यगतोऽपिमुदम् न अत्यजः त्यक्तवान् त्यजहानौकर्त्तरिलङ् कीदृशस्त्वम् जनकजामिथिलादेशाधिपतिजनकनामकमहाराजपुत्रीश्रीमतीसीताअनुजः कनिष्ठोभ्राताइशेषावतारश्श्री-

उपगतेनमुदाऽऽनकदुन्दुभेस्तनयतांनिहताःप्रबलाःखलाः।
नृपतयश्शिशुपालधरासुतप्रभृतयोभृतयोगिजनत्वया ॥ २२ ॥
असुरबुद्धिविमोहविधायिनासदयताभवताविनिवेदिता।
जगतिबुद्धशरीरधरेणभोदुरितपूरितपूरुषतापहृत् ॥ २३ ॥
सकलकल्मषनाशकरीपरापरमरम्यतयापरिपूरिता।
कलितकल्कितनोस्तवकालताजयतिसायतिसाधुनुताऽच्युत ॥ २४॥
जगतिधन्यतमाःपुरुषामतानन्नुतएवजयन्तिमनीषिणः।

मौँल्लक्ष्मणः ताभ्याम्युज्यते इतिजनकजाऽनुजयुक् युजिर् योगे सत्सुद्विषद्रुहदुहयुजविदभिदच्छिदेत्यादिनाक्विप् ॥ २१ ॥

उपगतेनेति हेभृतयोगिजनहेपोषितयोगिजनआनकदुन्दुभेर्वसुदेवस्य वसुदेवोऽस्यजनकस्सएवानकदुन्दुभिरित्यमरः तनयताम्पुत्रनाम् उपगतेनप्राप्तेनत्वया प्रबलादुरुद्धरशक्तयः महासामर्थ्यचमूशोभिनोवा बलङ्गन्धरसेरूपेस्थामानस्थौल्यसैन्ययो पुमान्हलायुधेदैत्यप्रभेदेवायसेऽपिच बलयुक्तेऽन्यलिङ्गस्स्याद्वास्त्रीलकेतुयोषितोतिमेदिनी खलादुर्ज्जनाः पिशुनोदुर्ज्जनःखलइत्यमरः शिशुपालधरासुतप्रभृतयः चैद्यनरकासुराद्याः नृपतयोराजानः मुदाहर्षेण अनायासेनातयावत् निहतामारिताः ॥ २२ ॥

असुरेति भोः हे दुरितैःपापैः पूरितानांसम्भृतानाम् पुरुषाणाञ्जनानाम् तापहृत्सर्वदुःखहर असुराणान्दैत्यानाम् बुद्धेः विमोहंविशिष्टंमोहम् कर्त्तव्याकर्त्तव्यज्ञानशून्यत्वमित्यर्थः विदधातिकरोतीतितच्छीलस्तेनभवतात्वया बुद्धशरीरधरेणसता हिंसादिमात्रनिवृत्तिदर्शनादतिशेषः जगतिलोके सदयतादयाधत्ता विनिवेदिताप्रकटीकृता ॥ २३ ॥

सकलेति हेअच्युतहेकालत्रयाबाध्य श्रीजगदीश कलितास्वीकृतास्वीकारज्ञानविषयीकृतावा कल्कितनुःकल्किनामधेया विष्णुयशोनामविप्रप्रवरपुत्रभूता तनुश्शरीरंयेन सतथोक्तस्तस्यतव सापुराणादिप्रसिद्धा कालताकृष्णवर्णता दुष्टजनेषु कृतान्ततावा जयति सर्वोत्कर्षेणवर्त्तते वर्त्तमानसामीप्येवर्त्तमानवद्वेति भविष्यतिवर्त्तमानताऽनुसन्धेया कीदृशीकालता स्वभक्तानाम् सकलकल्मषनाशकरीसर्वपापनिवारणचणा पु. की. परासर्वोत्कृष्टा पु. की. परमरम्यतया अतिकमनीयत्वेन परिपूरितासम्भृतायतयोनिर्ज्जितेन्द्रियायोगिनः साधवोनिर्वैराश्च तैर्नुता भक्तिभरेणस्तुता येनिर्ज्जितेन्द्रियग्रामायतिनोयतयश्चतेइत्यमरः ॥ २४ ॥

जगतीति हेहरेहेस्वजनपीडाहारक तेपुरुषाः धन्यतमाः अतिप्रशंसनीयाः मताः अथच तएव मनीषिणोविद्वांसः मताः अथच तएव जयन्तिसर्वोत्कर्षेणवर्त्तन्ते तेके येपुरुषा घनस्यनिविडस्यभावोघनता तयासहितम् यत् अघम्पापम्

अविरतन्तवनामजपन्तियेऽसघनताघनताधिहरंहरे ॥ २५ ॥
अखिलमङ्गलदङ्गलदंशुकञ्जलजलोचनमिन्दुमुखंसुखम् ।
अनुसरामिभवन्तमहंहरेदरहरंरहरङ्कमयेनमाम् ॥ २६ ॥
त्वमयिदेवयया वलवत्तरानसुररिपून् विनिहंसिरणेमुदा ।
अगदयागदयागदमुद्धराऽतनुतयानुतयानुतयाऽमम ॥ २७ ॥
इतिकृतस्तुतिरेषनिषेवितंरचितचारुरुचिंसितचन्दनैः ।
दयितयाऽयितयानमदच्युतङ्कमलयाऽमलयामलयाद्रिजैः ॥ २८ ॥

दुःखदा अघन्तुव्यसनेदुःखेदुरितेचनंपुंसकमितिमेदिनीतेन नतानाम् तदतिभाराक्रान्तत्वात् नम्रांसानाम् जनानाम् आधिहरम् पुनःपुनःसंसारदुःखानुभवसम्भावनाजनितमनोव्यथानिवारकम् पुंस्याधिर्म्मानसीव्यथेत्यमरः तव नाम अविरतंनिरन्तरम् जयन्ति हरेकृष्णवासुदेवश्रीरामसीतापते इतिपठन्ति ॥ २५ ॥

अखिलेति अयेहे हरे अहम् अखिलमङ्गलदंसकलकल्याणदातारम् गलल्ललितरगतिवशादधःपतत् अंशुकरूपीताम्बरंयस्यसंतम् यद्वा गलन्तइतस्ततःपतन्तः अंशवःशरीरकान्तिकिरणायस्यतम् जलजलोचनम् कमलनयनम् इन्दुमुखंशारदराकाचन्द्रवदनम् सुखंसुखयुक्तम् सुखकरंवा दरहरंसर्वभयनिवारकम् भवन्तन्त्वाम् अनुसरामि अनुगच्छामि अतः रङ्कम् अकिञ्चनम् मुक्तिप्रदसुकृतसम्पद्विरहितत्वादतिदरिद्रम् मांनिजसेवकम् न रह मा त्यज रहत्यागे कर्त्तरि-लोट् ॥ २६ ॥

त्वमिति अयिदेव त्वम् ययागदया रणेसङ्ग्रामेवलवत्तरानतिवलिनः सुररिपून्दैत्यान्मुदासमुत्साहेन विनिहंसि अगम्पर्वतम् द्यतिखण्डयतीत्यगदा तया दोअवखण्डने आतोऽनुपसर्गेकइतिकः नतनुतायस्यास्सा अतनुता तयामहत्येतियावत् नुतयास्तुतया यद्वा अतनुतयामहत्त्वेनकृत्वा नुतया तया गदया कौमोदक्यानाम मम अनन्यगतिकस्यस्वसेवकस्य गदंरोगम् सांसारिकदुःखाभिन्नमामयम् उद्धर-नाशय अत्रोत्पूर्वात् हृञः कर्त्तरिलोट् ॥ २७ ॥

इतिकृतेति इतिपूर्वोक्तरीत्या कृता स्तुतिर्येनसः एषः लक्ष्मीनारायणः मलयाद्रिजैर्म्मलयाचलोद्भवैः सितचन्दनैः रचितासंवर्द्धिता चारुःकमनीया रुचिर्द्युतिर्यस्यतम् अयितयाप्राप्तया अयगतौ कर्म्मणिक्तः आर्द्धधातुकस्येड्वलादेरितीट् अजाद्यतष्टाप् यद्वासञ्जातशुभदैवया अयशब्दात् तारकादित्वादितच् अमलयास्वच्छकान्त्या दयितयाप्रियतमयाकमलयाश्रीलक्ष्म्या निषेवितम् अच्युतंस्वस्वरूपात्कदापिनच्युतम् सदैकरसमित्यर्थः श्रीजगन्नाथम् अनमत्नुणमप्रह्वत्वे कर्त्तरि-लङ् ॥ २८ ॥

अथभूमिविभूषणत्वमाप्तं कलिकालप्रभवार्त्तिनाशहेतुम् ।
अवलोकितुकामएवकालीं कलिकाताख्यमसौपुरंसमागात् ॥ २९ ॥

पुरेतस्मिन्रश्मिव्रजविजितसूरांसुरनरा
ऽसुरैर्विप्रोविप्रोज्ज्वलदमलमालामतिनुताम् ।
जपापुष्पैर्गन्धादिभिरुपचितैरर्च्चितपदां
मुदादेवींस्तोतुं विहितवसतिम्प्राक्रमतसः ॥ ३० ॥

दृप्ताद्रिद्रोहिभद्रप्रदपदयुगले रुद्रहृद्रागहेतो
प्रोद्यद्दारिद्र्यविद्रावणनिपुणमतेमुद्रमुद्रेदयार्द्रे ।

अथेति असौलक्ष्मीनारायणः कलिश्चासौकालस्समयः सः प्रभवःकारणम् यस्याः सा यद्वा कलिकालात् प्रभवउत्पत्तिर्यस्याःसा कलिकालप्रभवा साचासौ अर्त्तिःपीडातस्या नाशोविध्वंसः तस्य हेतुङ्कारणभूताम् अर्त्तिःपीडाधनुष्कोट्यो-रित्यमरः कालीम् अवलोकितुन्द्रष्टुम् कामःसंकल्पोयस्यसः एवम्भूतस्सन्नेव भूमिविभूषणत्वमाप्तम् धराऽलङ्कृतितामापन्नम् कलिकाताख्यङ्कलिकातानाम-कम् पुरन्नगरम् समागात् अवलोकितुकामइत्यत्र लुम्पेदवश्यमः कृत्येतुङ्काममनसोरपि समोवाहिततत्तयोः मासस्यपचियुड्घञोरितिमकारलोपः औपच्छन्द-सिकंवृत्तम् तल्लक्षणन्तूक्तंवाग्वल्लभे चरमेयदिरेफयौभवेतामौपच्छन्दसिकन्द-लद्वयंचेदिति ॥ २९ ॥

पुरेइति सः पूर्वोक्तोलक्ष्मीनारायणोविप्रः तस्मिन्कलिकाताख्येपुरे विहिता-कृता वसतिर्निवासः यया सातां रश्मिव्रजैः किरणसमूहैः विजितसूरास्वते-जसाअधः कृतमार्त्तण्डाम् सुरनरासुरैर्देवमनुष्यदनुजैः अतिनुतामतिशयेनस्तु-ताम् विशेषेणप्रकर्षेण उज्ज्वलन्ती अमलास्वच्छा मालास्रक् यस्यास्सातां गन्धादिभिरुपचितैस्संवर्द्धितैः जपापुष्पैरोण्ड्रकुसुमैः अर्च्चितेपूजिते पदेचरणौयस्यास्सा ताम् देवींश्रीकालीम् मुदाहर्षेण स्तोतुम् प्राक्रमतप्रारभत अत्र प्रपूर्वा-त्क्रमुपादविक्षेपे इत्यतः प्रोपाभ्यांसमर्थाभ्यामितिप्रारम्भार्थे आत्मने पदम् कर्त्त-रिलङ् शिखरिणीवृत्तम् लक्षणन्तूक्तं वाग्वल्लभे रसैरुद्रैश्छिन्नायमनसभलाग-शिखरिणीति ॥ ३० ॥

दृप्तेति दृप्ताः पक्षोत्पत्तनगर्विता ये अद्रयोनानाविधनामानः पर्वताः तेभ्यः द्रुह्यतीतितच्छीलः सुप्यजातावितिणिनिः सः दृप्ताद्रिद्रोही शक्रः तस्य भद्रप्रद-कल्याणदाननिरतम् प[द]युगलंयस्याः सा तत्सम्बुद्धौ हेदृप्ताद्रिद्रोहिभद्रप्रदपद-युगले तथा रुद्रः शिवः तस्य हृद्रागः हृदयगतस्प्रेम तस्य हेतुः तत्सम्बुद्धौ हेरुद्रहृद्रागहेतो प्रकृष्टतया उद्यन्ती दारिद्र्यस्यविद्रावणेनिपुणासमर्था मतिर्य-स्यास्सा तत्सम्बुद्धौ हेप्रोद्यद्दारिद्र्यविद्रावणनिपुणमते मुदं हर्षम् रातिददाती-

सम्राजद्रूपसम्पद्रचितरिपुदरे दृग्गतद्राघिमाभे-
क्षुद्रान्कल्पद्रुकीर्त्ते त्वमिह जहि महामोहनिद्रां ममद्राक् ॥ ३१ ॥
अक्षीणक्षोभकक्षोपमसमलचलत्पक्षरक्षोविपक्ष
प्रोद्वाहिन्यक्षरे त्वं सकलकलिमलक्षोदिनि क्षेमभिक्षुम् ।
अक्षामक्षान्तिरक्षाकृदभयहृदये सक्षणेऽत्रक्षणे भोः
प्रत्यक्षे देवि दक्षे क्षितिसुरमवमामक्षमं वीक्षणेन ॥ ३२ ॥
सूत्रामोत्सूत्रशत्रुप्रकरबधबुधेऽकृत्रिमाभत्रिनेत्रे
मित्रच्छत्रे पवित्रे परिमलविलसद्गात्रि चित्रचरित्रे ।

तिमुद्रा हर्षदा मुद्रा आकृतिश्चेष्टा वा यस्यास्सा तत्सम्बुद्धौ हेमुद्रमुद्रे हे दयार्द्रे भक्तजनकरुणास्निग्धे सतीसमीचीना राजन्तीदीप्यमाना या रूपसम्पत्सौन्दर्यसमृद्धिः तया रचितमुत्पादितम् रिपूणांशत्रूणाम् महासुराणाम् दरस्त्रासोयया सा तत्सम्बुद्धौ हेसद्राजद्रूपसम्पद्रचितरिपुदरे दृग्गतेननेत्रगतेन द्राघिम्ना विशालत्वेन आभातीति तत्सम्बुद्धौ हेदृग्गतद्राघिमाभे कल्पद्रुः कल्पवृक्षः तस्य कीर्त्तिरिवकीर्त्तिर्यस्याः सा तत्सम्बुद्धौ हे कल्पद्रुकीर्त्ते त्वम् इहजगति मम क्षुद्रान्तुच्छाम् महामोहएवनिद्रा ताम् द्राक्झटिति जहि विनाशय निवारयेत्यर्थः जहीत्यत्र हनहिंसागत्योरित्यतः कर्त्तरि लोट् हन्तेर्जइतिजः स्रग्धरावृत्तमिदम् लक्षणन्तुपूर्वमुक्तम् ॥ ३१ ॥

अक्षीणेति भो नक्षीणोहीनः क्षोभश्चित्तविक्षेपोयेषाम् तानि अक्षीणक्षोभाणि कक्षोपमानिकाष्ठतुल्यानि तृणसमानीतियावत् समलानिसपापानि चलत्पक्षाणि-पलायमानसहायानि यानि रक्षांसिराक्षसाः तान्येव विपक्षाश्शत्रवः तान् प्रोद्वह-तीतितच्छीला तत्सम्बुद्धौ हे अक्षीणक्षोभकक्षोपमसमलचलत्पक्षरक्षोविपक्ष-प्रोद्वाहिनि तथाहे अक्षरे हेअविनाशिनि तथा हेसकलकलिमलक्षोदिनि सर्वक-लियुगोद्भवपापापहारिणि तथा अक्षामापुष्टा क्षान्तिः क्षमायस्यास्तत् अक्षामक्षान्ति अतएव रक्षाकृत् रक्षणकरम् अभयम्भीतिरहितम् हृदयम् यस्याः सा तत्सम्बुद्धौ हे अक्षामक्षान्तिरक्षाकृदभयहृदये तथा हे सक्षणे उत्सवसहिते तथा हे प्रत्यक्षे अपरोक्षे तथा हेदेवि तथा हे दक्षेनिजजनसर्वकार्यसम्पादनकुशलेत्वम् अत्रास्मिन् क्षणेसमये क्षेमभिक्षुङ्कल्याणार्थिनम् क्षितिसुरम्भूमिदेवम् अक्षममसमर्थम् माम् वीक्षणेन दयार्द्रदृष्ट्या अवलोकमनेनेतियावत् अवरक्ष ॥ ३२ ॥

सूत्रामेति अयिहे सूत्राम्णः इन्द्रस्य उत्सूत्रानीतिशास्त्रविरुद्धकर्म्मकारिणः ये शत्रवोदैत्याः तेषाम् प्रकरस्यसमूहस्य बधेहनने बुधापण्डिता तत्सम्बुद्धौ हेसूत्रामोत्सूत्रशत्रुप्रकरबधबुधे नकृत्रिमाऽकृत्रिमा स्वाभाविकेति यावत् आभा-येषान्तानि तथोक्तानि त्रीणिनेत्राणिनयनानि यस्यास्सातत्सम्बुद्धौ हेअकृत्रिमाभ-

सत्रासत्राणसत्रार्ज्जितसुकृततते ऽपत्रपामात्रपात्र-
न्धात्रित्रायस्वपुत्रोपममयिसतिमाञ्जैत्रपत्रेत्वमत्र ॥ ३३ ॥

याक्रोष्टुक्रोडचक्रीवदुपमितमये ऽविक्रियेसत्कृपाढ्ये-
चक्रे ऽतिक्रूरवक्रप्रकृतिमपिजगत्सानिजक्रोडनिष्ठम् ।
सुक्रीडेचक्रिजुष्टे ऽरमवतुभवतीन्यक्कृतं लोकचक्रैः
स्सक्रोशक्रोधशक्राहितखलबलहृद्विक्रमप्रक्रमेमाम् ॥ ३४ ॥

त्रिनेत्रे यद्वा अकृत्रिमाभेइतिपाठः तथा हेमित्रच्छत्रेमार्त्तण्डसदृशप्रकाशमानात-पत्रे यद्वा हेअमित्रच्छत्रे चन्द्रातपत्रे तथा हेपवित्रेपावनस्वरूपे तथा परिमलेना-तीवहृद्यङ्गमेन गन्धविशेषेण विलसत्सुभगीभवत् गात्रं शरीरंयस्याःसा तत्स-म्बुद्धौ हेपरिमलविलसद्गात्रि अङ्गगात्रकण्ठेभ्योवक्तव्यमितिङीप् विमर्दोत्थेपरि-मलोगन्धेजनमनोहरइत्यमरः तथा चित्रत् आश्चर्यमिवाचरत् सर्वप्रातिपदिकेभ्यः क्विवा वक्तव्यइतिक्विप् पश्चाच्छतृप्रत्ययः चरित्रंयस्यास्सातत्सम्बुद्धौ हेचित्रच-रित्रे तथा सत्रासानांसभयानाम् त्राणंरक्षणमेव सत्रम् क्रतुः तेन अर्ज्जितासम्पा-दिता सुकृततातिः पुण्यपरम्परायया सा तत्सम्बुद्धौ हेसत्रासत्राणसत्रार्ज्जित सुकृततते तथा हेधात्रि सकलजगन्मातः तथा जैत्रञ्जयनशीलम् पत्रंवाहनंयस्याः सातत्सम्बुद्धौ हेजैत्रपत्रेसिंहवाहने इत्यर्थः हेसति त्वम् अत्रास्मिन् जगति अप-त्रपामात्रपात्रम् अन्यतो लज्जामात्रभाजनम् पुत्रोपमन्तनयतुल्यम् माम् त्रायस्व-रक्षत्रैङ्पालने कर्त्तरिलोट् ॥ ३३ ॥

येति अयेहे अविक्रियेविकाररहिते वस्तुतस्सदेकरसे इत्यर्थः तथा हेसत्कृ-पाढ्येनिरुपाधिककरुणाकारिणि हेसुक्रीडेजगद्द्रोहिदैत्यवधादिशोभनखेले तथा हेचक्रिजुष्टेश्रीमद्विष्णुसंसेविते तथा क्रोशश्चक्रोधश्च ताभ्याम् रणगर्जनकोपा-भ्यामित्यर्थः सहिताय शक्रस्येन्द्रस्य अहिताअरयः तएव खलादुष्टाः तेषाम् बलंसामर्थ्यम् सैन्यञ्च हरतीतितथाभूतः विक्रमप्रक्रमःपराक्रमप्रारम्भः यस्या-स्सातत्सम्बुद्धौ हेसक्रोशक्रोधशक्राहितखलबलहृद्विक्रमप्रक्रमे या भवती जगत्सर्वंविश्वम् चक्रे सा भवती क्रोष्टा शृगालः क्रोडस्सूकरः चक्रीवान्गर्दभः तदुपमितन्तुलितम् महाऽज्ञानाधिकरणत्वात्पशुसममित्यर्थः तथा अतिक्रूराऽत्य-न्तभयकारिणी वक्राकुटिला प्रकृतिस्स्वभावोयस्य तमपि अतएव लोकचक्रैः जनसमूहैः न्यक्कृतन्धिक्कृतम् निजक्रोडनिष्ठंस्वोत्सङ्गस्थितम् माम् अरंशी-घ्रम् अवतुरक्षतु ॥ ३४ ॥

सुभ्रूरिति हेसुभ्रूः शोभनभ्रुकुटिविशिष्टे तथा शुभ्रोगौरः उरुर्म्महान् विभ्रा-जितः प्रकाशितः विकटोविकरालः शत्रुभयप्रदइत्यर्थः हसोहासोयस्यास्सा तत्सम्बुद्धौ हेशुभ्रोरुविभ्राजितविकटहसे तथा अदभ्राबहुला कालाभ्रस्यसजल-

सुभ्रूरश्रुभ्रोरुविभ्राजितविकटहसेऽदभ्रकालाभ्रशोभे
तीव्रार्त्तिव्रातयुक्तंशरणगतजनोतिव्रतेऽघव्रजाढ्यम् ।
उग्रानुग्राह्युदग्रद्युतिनिचयजयद्विग्रहेऽतिग्रहेशे
दुर्भाग्यव्याघ्रविघ्रातमवपरिचकासद्घृणेसद्घृणेमाम् ॥ ३५ ॥
नष्टानिष्टेऽजनिष्टेहितविहितहिते विष्टपम्पिष्टतुष्टे
तुष्टेपुष्टेन्द्रजुष्टेयत इदमखिलंहृष्टरिष्टापकृष्टम् ।
शिष्टेहृष्टेऽतिसृष्टेत्वदवनतमतो भ्रष्टदिष्टंसुदृष्टे-
विप्लुष्टस्पष्टकष्टेत्वमव सपदिमाङ्क्लिष्टमातष्टचेष्टम् ॥ ३६ ॥

जलदस्य शोभेवशोभायस्यास्सातत्सम्बुद्धौ हेअदभ्रकालाभ्रशोभे तथा शरणगतानाञ्जनानाम् ऊतिः रक्षणमेव व्रतंनियमः यस्यास्सातत्सम्बुद्धौ हेशरणगतजनोतिव्रते तथा उग्रं शिवम् अनुगृह्णातीतितच्छीलउग्रानुग्राही उदग्रद्युतिनिचयेनसमुत्कटदीप्तिसमूहेन जयन्सर्वोत्कर्षेणवर्त्तमानः विग्रहश्शरीरंयस्यास्सा यद्वा उग्रानुग्राही उदग्रद्युतीनांनिचयोयस्यतथाभूतः जयन्विग्रहोयस्यास्सा तत्सम्बुद्धौ हेउग्रानुग्राह्युदग्रद्युतिनिचयजयद्विग्रहे तथा हेअतिग्रहेशे अतिक्रान्तमार्त्तण्डे तथा परिचकाशंतः परितः शोभमानाः घृणयः किरणायस्यास्सा किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयइत्यमरः तत्सम्बुद्धौ हेपरिचकासद्घृणे तथा सतीसमीचीना विद्यमानावा घृणाकरुणायस्यास्सातत्सम्बुद्धौ हेसद्घृणे यद्वा असती असमीचीना अविद्यमाना च घृणाजुगुप्सायस्यास्सा तत्सम्बुद्धौ हेअसद्घृणे घृणाजुगुप्साकृपयोरिति विश्वप्रकाशः अघव्रजाढ्यम्पापभारातिपीडितम् अतएव तीव्रेणआर्त्तिव्रातेनपीडासमूहेनयुक्तम् तथा दुष्टम् भाग्यन्दैवमेव व्याघ्रस्तेन विघ्रातम् गृहीतम् माम् त्वम् अवरक्ष सुभ्रूरश्रुभ्रोरुविभ्राजितनिर्चितहसे इत्यपिपाठः॥३५॥

नष्टेति नष्टमनिष्टंयया सा तत्सम्बुद्धौ हेनष्टानिष्टे तथा ईहितेनचेष्टया विहितकृतम् हितमानुकूल्यंययासातत्सम्बुद्धौहेईहितविहितहिते तथा पिष्टाकुष्टायःयासातत्सम्बुद्धौहेपिष्टदुष्टे अतएव हेतुष्टेमनस्सन्तोषयुक्ते तथा पुष्टश्चासाविन्द्रश्चतेनजुष्टेसेविते तथा हेशिष्टेसर्वोत्तमे तथा हेहृष्टेसहर्षेहृषेर्लोमसुइत्यनेनविकल्पेटकृतवात् यस्यविभाषा इत्यनेनेडभावः हृष्टोरोमाञ्चितेऽपि च जातहर्षे प्रतिहतेविस्मितेऽप्यभिधेयवदितिमेदिनी यद्वाहेहृष्टेविस्मिते यद्वाहे अहृष्टेअप्रतिहते विस्मितप्रतिघातयोश्चेत्यनेन वार्त्तिकेन विकल्पादिडभावः तथा हेअतिसृष्टेअतिक्रान्तसर्गे जन्मरहितेइत्यर्थः कालत्रयैकस्वरूपे इतियावत् तथा हेसुदृष्टेशोभननयनेभक्तजनशुभकारिसमवलोकनेवा तथा विप्लुष्टन्दग्धम् स्पष्टंस्फुटम् कष्टम् ययातत्सम्बुद्धौ हेविप्लुष्टस्पष्टकष्टे भक्तनिवारितदुःखइत्यर्थः यतोयस्मात्कारणात् इदम् दृश्यमानम् अखिलसवम् आतवुद्धिा विष्टपञ्जगत् त्वत्त्वत्तः सकाशात् अजनिष्ट जनिप्रादुर्भावे

अव्याअव्याजमव्यावलिरुधिरवलिद्रव्यभोक्तव्यतुष्टे
सव्यासव्याधिसव्यासमुखमुनिमते क्रव्यभुग्व्यूहभित्त्वम् ।
पव्यापव्यालपव्यालापितगुणगणेहव्यभाग्दिव्यदीप्ते
भव्याभव्याशभव्यादृतमहितपदेनव्यदानव्ययंमाम् ॥ ३७ ॥

कर्त्तरिलुङ् अतोऽस्मात्कारणात् त्वम् रुष्टमप्रसन्नम् यत् रिष्टमशुभम् तेन अपकृष्टम् तुच्छताङ्गतम् तथा भ्रष्टदिष्टम् प्रध्वस्तसद्भाग्यम् तथा अतएव क्लिष्टम् क्लेशयुक्तम् तथा आतष्टचेष्टम् क्षीणव्यापारम् तथा अतएव अवनतमन्नम् माम् सपदिसत्वरम् अवरक्ष शिष्टेऽधृष्टेऽतिसृष्टे इत्यपिपाठः ॥ ३६ ॥

अव्याइति अवीनांमेषाणाम् अवयश्शैलमेषार्काइत्यमरः आवलिः पङ्क्तिः तस्याः रुधिरञ्च बलिद्रव्याणि उपदावस्तूनि भोक्तव्यानिभोज्यानिचतैः यद्वा अव्यावलिरुधिरञ्च बलयः उपदाः द्रव्याणिदक्षिणाः भोक्तव्यानिच तैः यद्वा अव्यावलिरुधिरञ्च बलिद्रव्याणिच तान्येवभोक्तव्यानि तैः तुष्टा तत्सम्बुद्धौ हे-अव्यावलिरुधिरवलिद्रव्यभोक्तव्यतुष्टे तथा सव्यासंविस्तारसहितम् व्याधिरोगम् स्त्रीरुग्रजाचोपतापरोगव्याधिगदामयाइत्यमरः स्यन्तिनाशयन्तितेत सव्यासव्याधिसाः षोन्तकर्म्मणि अस्मात् आतोऽनुपसर्गेकः तेचते व्यासमुखावादरायणाद्याः मुनयः तेषाम् मता तत्सम्बुद्धौ हेसव्यासव्याधिसव्यासमुखमुनिमते यद्वा सव्यासव्याधिसांचासौव्यासमुखमुनिसंताचेतिकर्मधारयः तत्सम्बुद्धौ तथा हेक्रव्यभुग्व्यूहभित् राक्षससमूहभेदिनि रामावतारेऽपि राक्षसविनाशे शक्तेरेवकारणत्वादित्यर्थः तथा पविवज्रम् आप्नोतीतिपव्यापः इन्द्रः आप्लव्याप्तौकर्मण्यण् व्यालान्पातिरक्षतीतिव्यालपः भगवाननन्तः पारक्षणेपूर्ववत्कः ताभ्याम् व्यालपिताविशेषणवर्णिताः गुणगणाः यस्यास्सातत्सम्बुद्धौ हेपव्यापव्यालपव्यालपितगुणगणे तथा हेहव्यभाग्दिव्यदीप्ते पावकोज्ज्वलप्रभे तथा भव्याअभव्यावा आभायेषान्ते भव्याभाः अभव्याभावा तथा व्याशाविशिष्टाशाः विगताशावा ये भविनोजन्मिनः प्राणिनइतियावत् तैः आदृतेसत्कृते महितेपूजितेच पदेचरणौयस्यास्सातत्सम्बुद्धौ भव्याभव्याशभव्यादृतमहितपदे यद्वा अभव्याभव्याशभव्यादृतमहितपदे त्वम् नव्योनूतनः दानव्ययोदातृत्वनाशोयस्यसतम् माम् अव्याजम् निष्कपटम् यथास्यात्तथा अव्यारक्ष नव्यमानव्ययंमामितिवापाठः यद्वा अव्याजमिति मामित्यस्यविशेषणम् ॥ ३७ ॥

कल्येति हेआशुकल्याणदविशादमतेशीघ्रशुभदायिस्वच्छबुद्धे तथा हेकल्यघावल्यवल्गुच्छल्योन्मूलिनि कलियुगसम्बन्धिपातकपरम्परारूपस्थिरशराग्रदेशशसिलोहमयफलोद्धारिणि तथा हेअतुल्ये अनुपमे तथा हे अमलललदनलज्वालजालाभजिह्वे स्वच्छचञ्चदग्निकीलरुछटाच्छविरसने हेकालिकेहेकालिकेवीप्सायांद्विरुक्तिः यद्वा अकन्ति कुटिलम् गच्छन्तीतिअकाः अककुटिलायाङ्गतौ पचाद्यच्

कल्याकल्याशुकल्याणदविशदमतेकल्यघावल्यवल्ग-
च्छल्योन्मूलिन्यतुल्येऽमलललदनलज्वालजालाभजिह्वे ।
लीलालीलावलीलामरभरणचणश्रीलशीलामयाया
कल्पानल्पासुजल्पाऽतिजयतु भवतीकालिकेकालिकेसा ॥ ३८ ॥

इत्थंस्तुत्वामतमतिरसौमङ्गलस्तोमदाङ्घ्रि-
ङ्कालीङ्कल्यः कलितविनतिर्भासमानां समानाम् ।
पश्यन्नश्यन्निखिलदुरितस्तत्तदालोकनीयं
वस्तुस्वस्तिप्रचितविशिखाङ्काशिकाम्भूय आगात् ॥ ३९ ॥

अकाः आलयस्सख्यः यस्याः सा अकालिः अकालिरेवाऽकालिका स्वार्थेकः यद्वा अनुकम्पिताः आलयः आलिकाः अनुकम्पायामितिकः अकाआलिकाः यस्यास्सा अकालिका तत्सम्बुद्धौ हेअकालिके यद्वा अकानाम् कुटिलगतीनाम् अलीनाम्भ्रमराणाम् कःप्रकाशइवकःप्रकाशः यस्यास्सा तत्सम्बुद्धौ यद्वा कःप्रकाशः अस्तियस्य तत्कम् अर्शआदिभ्योऽच् कम् प्रकाशवत् अलिकंललाटंयस्यास्सा तत्सम्बुद्धौ हेकालिके मया याभवती अकलिस्वशरणत्वेन अज्ञायि कलगतिसङ्ख्यानयोः कर्म्मणिलुङ् सा भवती अति अतिशयेन जयतु जयेनवर्त्तताम् कीदृशीभवती कल्यानिरामया सर्वदाक्षेमयुक्ते तियावत् पुनः की. लीलानांविलासानाम् आलीम्परम्पराम् लाति आदत्ते इति लीलालीला लाआदाने आतोऽनुपसर्गेकः पु. की. अवलिनोनिर्बलाः ये इलामराः भूसुराब्राह्मणाइत्यर्थः तेषाम् भरणेनपोषणेन वित्तम्प्रसिद्धम् तेनवित्तइतिचणप् श्रीलंरम्यम् शीलंस्वभावोयस्यास्सा शीलंस्वभावेसद्वृत्तेइत्यमरः अवलीलामरभरणचणश्रीलशीला पु. की. कल्पासमर्था पु. की. अनल्पामहती पु. की. सुजल्पाशोभनभाषणा उमाकात्यायनीगौरीकालीहैमवतीश्वरीइत्यमरः कश्चात्मनिमयूरेचकः प्रकाशउदाहृतः कंशिरोजलमाख्यातङ्कंसुखङ्कंमुखंस्मृतमित्येकाक्षरः ॥ ३८ ॥

इत्थमिति मतासर्वसम्मता मतिर्बुद्धिर्यस्यसः कल्योनिरामयः कलितविनतिःस्वीकृतनम्रतः नश्यन्नाशम्प्राप्नुवत् निखिलंसकलम् दुरितम्पापम् यस्यसः असौलक्ष्मीनारायणः भासमानाम्प्रकाशमानाम् समानांमानसहिताम् अविषमाचरणांवा मङ्गलस्तोमदाङ्घ्रिम् कल्याणसमूहदातृचरणाम् कालींश्रीकालिकान्देवीम् इत्थम्पूर्वोक्तरीत्या स्तुत्वा तत्तत् मार्गगतम् आलोकनीयम्दर्शनीयम् वस्तु पश्यन्सन् स्वस्तिप्रचिताविशिखांशुभविशिष्टरथ्याम् काशिकांश्रीवाराणसीम् भूयः पुनः आगादागमत् मन्दाक्रान्तावृत्तमिदम् लक्षणन्तु मन्दाक्रान्ताऽम्बुधिरसनगैर्मोभनौतौगयुग्ममितिवाग्वल्लभे ॥ ३९ ॥

श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्श्रीदेविप्रसादकविना विहितेनिबन्धे ।
सर्गस्समाप्तिमगमद्रमणीयलक्ष्मीनारायणीयचरितेऽत्रचतुर्थएषः ॥४०॥

इति श्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जनशर्म्मात्मजकविवर-
देविप्रसादनिर्मिते कौशल्यगोत्रोद्भवककविवरलक्ष्मीनारायण-
जीवनचरितात्मके मङ्गलाङ्के लक्ष्मीनारा-
यणकाव्ये चतुर्थ स्सर्गः ॥४॥

---

## पञ्चमसर्गप्रारम्भः ।

नेत्रभूनवशशाङ्कमितेऽब्दे मासआश्विनइतीरितनाम्नि ।
कृष्णपक्षगविरिञ्चितिथौससम्प्रपद्यनगरीङ्गिरिशस्य ॥ १ ॥
धर्म्मरक्षणपरः परमश्रीरर्चनीयचरणश्चरितेन ।
चारुणाऽरुणकरः करुणायाआकरः सुखकरः पुरुरोचिः ॥ २ ॥

श्रीति एषः चतुर्थः सर्गः समाप्तिमगमत् अन्यद्व्याख्यातम् वसन्ततिलका-
वृत्तम् ॥ ४० ॥

इति श्रीस्वकृतस्य कौशल्यगोत्रोद्भव
कविवरलक्ष्मीनारायणजीवनचरितात्मकस्य लक्ष्मी-
नारायणकाव्यस्य सुमङ्गलाख्यायां व्याख्यायाम्
चतुर्थस्सर्गः समाप्तः ॥ ४ ॥

---

नेत्रेति सः लक्ष्मीनारायणः नेत्रभूनवशशाङ्कमिते द्वादशाधिकैकोनविंशति-
शततमे अब्देवर्षे आश्विनइतीरितनाम्निप्रसिद्धाभिधाने मासे कृष्णपक्षगविराञ्चि-
तिथौ असितपक्षवर्त्तिन्यान्द्वितीयायान्तिथावितियावत् गिरिशस्यश्रीविश्वनाथस्य
नगरींश्रीकाशीनामिकाम्पुरीम् सम्प्रपद्यप्राप्य स्वमात्मानम् अमनाक्बहु अत्यन्त-
मित्यर्थः कृतार्थङ्कृतकृत्यम् अभिमेनेऽभिमन्यतेस्मेतितृतीयश्लोकेनसम्बन्धः अत-
आरभ्यपञ्चविंशतिसङ्ख्याकानिस्वागतावृत्तानि तल्लक्षणम् तु स्वागतारनभगैर्गु-
रुणाचेतिवाग्वल्लभे ॥ १ ॥

धर्मेति चारुणाचरितेन उपलक्षितः अरुणकरः सौभाग्यसूचकरक्तवर्णपाणिः
अनूरुतेजस्कोवा करुणाकरःकृपाखनिः कृपाकरद्वा सुखकरस्सर्वजनशर्म्मकारकः
पुरुरोचिर्बहुप्रकाशः इतरत् स्पष्टम् ॥ २ ॥

राजमानतरमानसमानो मानितोमुनिसमोमनुजाघैः ।
सज्जनत्वजनिताद्भुतकीर्त्तिः स्वंकृतार्थममनागभिमेने ॥ ३ ॥ विशेषकमिति
ब्राह्मणस्ययदयं निजधर्म्मस्सन्ततम्पठनपाठनकृत्त्वम् ।
तत्रतत्पठितुमैच्छदसक्तोदुर्विषेणसदृशेविषयेऽसौ ॥ ४ ॥
शब्दशास्त्रपरिबोधविहीनस्सर्वशास्त्रपरिबोधयुतोऽपि ।
मूर्खएव पुरुषः पुरुधीभिः कथ्यतेबुधजनैर्ननुलोके ॥ ५ ॥
इत्यसौशुचिरुचिः पूर्विचिन्त्यश्रीमतस्स्तुतदिगन्तगकीर्त्तेः ।
शब्दशास्त्रमतिसम्मतकाकारामनामकगुरोरपठद्द्राक् ॥ ६ ॥ युग्मम्

राजमानेति राजमानतरोऽतिभ्राजमानः मानसमानश्चित्तसमुन्नतिर्यस्यसः यद्वा राजमानतरोमानोयस्यसः सचासौसमानस्ससत्कारः सम्यक् प्राणवान् वा सज्जनत्वेनसुजनतया जनिता अद्भुता कीर्त्तिर्यस्यसः चतुर्थश्चरणस्तु प्रथम श्लोकेव्याख्यातः अन्यत्स्पष्टम् त्रिभिश्श्लोकैर्विशेषकमेतत् तदुक्तंवाग्वल्लभे वृत्तश्चार्द्धसमंसमञ्चविषमन्त्रेधाऽहिराजोदितंमात्रावणसमुद्भवंचनियमतः पद्यङ्गणानाम्भवेत् तेनैकेनच मुक्तकंनिगदितन्द्वाभ्यान्तथायुग्मकन्तैस्सन्दानितकङ्कलापकमिति प्रायश्चतुर्भिर्म्मतम् उक्तन्तत्कुलकञ्चपञ्चभिरतश्चोर्द्ध्वमहापूर्वकंयावद्विंश्यमितम्भवेदानियमाद्ध्यङ्गणानामथो प्रोक्तन्तच्चचतुर्विधस्सभगवताचक्षुश्श्रवस्स्वामिनामुक्तश्चूर्णकवृत्तगन्धिकलिकाप्रायं यथालक्षणम् इति सन्दानितकमिति विशेषकपर्य्यायम् ॥ ३ ॥

ब्राह्मणस्येति यद्यस्मात्कारणात् सन्ततंनिरन्तरम् पठनपाठनकृत्यमध्ययनाध्यापनकारिता ब्राह्मणस्य अयम् निजधर्म्मः अस्ति तत्तस्मात् कारणात् दुर्विषेणदुष्टगरलेन सदृशेविषये स्रक्चन्दनवनितादिभोगे असक्तोऽननुरक्तः असौलक्ष्मीनारायणः तत्र श्रीकाश्याम् पठितुम् पैच्छदिच्छतिस्म ॥ ४ ॥

किम्पठितुमैच्छदित्यपेक्षायामाह शब्देति लोके पुरुधीभिर्बहुबुद्धिभिः बुधजनैर्विद्वद्भिः शब्दशास्त्रपरिबोधविहीनोव्याकरणशास्त्रपरिष्कृतज्ञानहीनः सर्वशास्त्रपरिबोधयुतोऽपि सकलवेदान्तादिशास्त्रपरिष्कृतज्ञानशाल्यपिपुरुषःमूर्खोऽनभिज्ञएव ननुनिश्चयेन कथ्यते ॥ ५ ॥

इत्यसाविति शुचिरुचिःपवित्रतरमनोरथः अग्निसमप्रभोवा असौलक्ष्मीनारायणः इतिपूर्वोक्तम् प्रविचिन्त्यविचार्य श्रीमतस्साद्विद्यादिसम्पत्तिशोभिनः स्तुतादिगन्तगाचकीर्त्तिर्यस्यतस्मात् अतिसम्मतात्सुविचारास्पदात् काकारामनामकात् सारस्वतप्रवरात् काकारामसदभिधानात् गुरोरध्यापकात् शब्दशास्त्रम् व्याकरणम् द्राक् झटिति नतुबहुकालंयापयित्वा अपठत् पपाठ द्वाभ्यांयुग्ममेतत् ॥ ६ ॥

यस्यसंरचयतिस्मृतिरुच्चैर्वावदूकमतिमूकमपीह ।
तंसबीजमनिशंयतचित्तोभारतीमनुमथाऽजपदेषः ॥ ७ ॥
तत्प्रभावलसदद्भुतशक्तिर्भक्तएष पुरुषैर्दुरवापम् ।
सोत्सवस्सहृदयः स्तवनीयंसत्कवित्वमुचितम्प्रतिपेदे ॥ ८ ॥
धर्म्मपत्न्यथ पवित्रचरित्राऽमुष्यकाम्यकवितानिलयस्य ।
आत्मजातमपहाय पुरारेराजगामपुरमुत्सुकचित्ता ॥ ९ ॥
यानिजैस्सुचरितै र्जयतिस्माऽरुन्धतीङ्गुणवती जगतीह ।
सासतीपतिमवेक्ष्यतदानीङ्कामपि स्वमनसोमुदमापत् ॥ १० ॥
लोकगीतविमलातुलकीर्त्तिव्रातशैवदशमूर्द्धकृतस्य ।
स स्तवस्यशिवताण्डवनाम्नोनिर्म्ममौ सुरुचिरामथटीकाम् ॥ ११ ॥

यस्येति अथ इहजगति यस्यभारतीमनोः स्मृतिःस्मरणम् अतिमूकमपिपुरुषम् उच्चैर्वावदूकमतिवाग्मिनम् रचयतिकरोति एषलक्ष्मीनारायणः यतचित्तोजितमनस्कस्सन् सबीजम् वीजसहितम् तम् भारत्यास्सरस्वत्याः मनुंमन्त्रम् अनिशंनिरन्तरम् अजपत् ॥ ७ ॥

तदिति तस्यभारतीमन्त्रस्यप्रभावात् लसन्ती अतिस्फुरन्ती अद्भुताऽऽश्चर्यमयीशक्तिर्यस्यसः भक्तोभक्तियुक्तः सोत्सवस्सोत्साहः एषः लक्ष्मीनारायणः सहृदयस्सन् पुरुषैर्दुरवापङ्कष्टसाध्यतरम् स्तवनीयम्प्रशंसनीयम् उचितंयोग्यम् सन्निर्दोषम् कवित्वङ्काव्यकारित्वम् प्रतिपेदेप्राप ॥ ८ ॥

धर्म्मेति अथ अमुष्य कवीन्द्रस्यलक्ष्मीनारायणस्य धर्म्मपत्नीमङ्गलादेवीनामधेयावनिता आत्मजातङ्गोपिचन्द्राभिधन्तनयम् अपहायस्वदेशे एव पितामहसविधेपरित्यज्यं उत्सुकचित्ता पतिदर्शनोत्कण्ठितमानसासती पुरारेः श्रीविश्वनाथस्यपुरंश्रीकाशीनामनगरीमित्यर्थः आजगाम आगतवती अन्यत्स्पष्टम् ।९।

येति गुणवतीया अमुष्य धर्म्मपत्नी इहाऽस्मिन् जगतिलोके निजैस्स्वकीयैः चरितैःपतिशुश्रूषादिभिराचरणैः अरुन्धतीमेतन्नामधेयांवसिष्ठमुनिधर्मपत्नीम् जयतिस्म सतीपतिव्रतासा सतीसाध्वीपतिव्रतेत्यमरः तदानीम् श्रीकाश्यागमनावसरे पतिम् अमुंलक्ष्मीनारायणम् अवेक्ष्यदृष्ट्वा कामपि अनिर्वचनीयाम् स्वमनसः मुदम्प्रसन्नताम् आपद्लभत ॥ १० ॥

लोकेति अथ सः कवीन्द्रोलक्ष्मीनारायणः शिवताण्डनाम्नः स्तवस्यस्तोत्रस्य स्तवस्स्तोत्रन्नुतिस्स्तुतिरित्यमरः सुरुचिरामतिरमणीयाम् टीकांव्याख्याम् निर्म्ममौकृतवान् कीदृशस्यस्तवस्य लोकैर्गीतः विमलोनिष्कलङ्कः अतुलस्सदृशान्तररहितः कीर्त्तिव्रातोयशःपटलम् यस्यसंचासौ शैवश्शिवभक्तःदशमूर्द्धादशशिराः राक्षसवंशावतंसःश्रीमान्रावणः तेन कृतस्यनिर्मितस्य ॥ ११ ॥

तद्विलोकनसमुद्भवहर्षोऽमर्षहीनहृदयोदयमानः ।
एतमुज्ज्वलमतिम्बहु काकारामनामकगुरुः प्रशशंस ॥ १२ ॥
विश्ववन्दितपदोऽखिलविद्यारत्नसिन्धुरधिकस्तुतकीर्त्तिः ।
विप्रवंशकुमुदाकरराकाऽधीश्वरोवरविकस्वरकान्तिः ॥ १३ ॥
लब्धवर्णपरिवर्णितकाकारामनामकगुरुप्रियशिष्यः ।
सद्गुणास्पदमशोकदलोकाऽऽकर्णनीयतरचारुचरित्रः ॥ १४ ॥
तामवेक्ष्यशिवताण्डवटीकांसान्वयोपचितसर्वपदार्थाम् ।
विस्मितोमनसिठाकुरदत्तःकोविदोऽथसुकविम्बहुमेने ॥ १५ ॥
सत्प्रशस्तिभिरुपस्तुतपादस्स्वस्तिमान्सकिलठाकुरदत्तः ।
भास्करग्रहणपर्वणिशैवंमन्त्रराजमदिशत्कवयेऽस्मै ॥ १६ ॥

तदिति तस्याः शिवताण्डवचन्द्रिकाख्यायाः शिवताण्डवस्तवटीकायाः विलोकनात् समुद्भवस्समुत्पत्तिर्यस्यसतथोक्तोहर्षोयस्ययस्मिन्वा सतथोक्तः काकारामनामकगुरुः एतम् कवीन्द्रंलक्ष्मीनारायणम् बहु अत्यन्तम् प्रशशसश्लाघास्पदङ्कृतवान् अन्यत्स्पष्टम् दयमानइत्यत्र दयदानगतिरक्षणहिंसाऽऽदानेष्विति-धातोः हिंसार्थवर्जयित्वाखर्वेष्वर्थेषुशानच् ॥ १२ ॥

विश्वेति विश्वैर्वन्दितेपदेयस्यसः अखिलास्सर्वाविद्या एवरत्नानिमणयः तेषाम् सिन्धुस्समुद्रः आश्रयइतियावत् अधिकस्तुतकीर्त्तिः बहुगीतयशाः विप्रवंशएवकुमुदाकरः तस्य राकाधीश्वरः पूर्णचन्द्रमाः वरविकस्वरकान्तिः श्रेष्ठविकाशिशोभः विकस्वरेत्यत्र स्थेशभासपिशकसोवरच् इतिवरच् ॥ १३ ॥

लब्धवर्णेति लब्धवर्णैर्विचक्षणैर्विद्वद्भिः लब्धवर्णोविचक्षणइत्यमरः परिवर्णितस्यसंस्तुतस्य काकारामनामकस्य गुरोरध्यापकस्य प्रियशिष्यः छात्रोत्तमः सतांसमीचीनानांविद्यमानानांवा गुणानान्धैर्य्यगाम्भीर्य्यादीनाम् आस्पदमधिकरणभूतः अशोकदंशोकाभावकारि लोकानाञ्जनानाम् आकर्णनीयमतिश्रोतव्यम् चारुरमणीयम् चरित्रंयस्यसः ॥ १४ ॥

तामिति एवम्भूतः कोविदोविद्वान् ठाकुरदत्तः सारस्वतप्रवरः श्रीठाकुरदत्तशर्मा अन्वयैस्सहिताः उपचिताः परिपुष्टाः सर्वेषाम्पदानाम् अर्थाः यस्यान्ताम् ताम्पूर्वोक्ताम् शिवताण्डवस्यस्तवस्य टीकांव्याख्याम् अवेक्ष्यदृष्ट्वा मनासिविस्मितस्साश्चर्यस्सन् सुकविङ्कवीन्द्रम् लक्ष्मीनारायणम् बहुमेने सत्कृतवान् त्रिभिर्विशेषकमेतत् ॥ १५ ॥

सदिति सतीभिस्सत्याभिरुत्तमाभिर्वा प्रशस्तिभिः प्रशंसाभिः उपस्तुतौसम्भावितौपादौचरणौयस्यसः स्वस्तिमानतिप्रसन्नः सपूर्वोक्तः श्रीमान् विद्वद्वरः ठाकुरदत्तशर्म्मा भास्करग्रहणपर्वणिसूर्यग्रहणपर्वणि शैवंशिवदैवतम् सा-

मन्त्रराजमुपगृह्यविधिज्ञोवद्धपाणिकमलोऽमलचेताः ।
शुद्धवागतिमुदानतमौलिस्स्तौतिसस्मसुकविर्गुरुमेतम् ॥ १७ ॥
दीनदुःखदलनेऽतिसमर्थासज्जनैरवनतैःपरिगीता ।
प्रीतहृद्भिरुपनीतसपर्य्यैःश्रीगुरोजयतिसातवकीर्त्तिः ॥ १८ ॥
त्वत्पदाम्बुजयुगंरमणीयंयैर्गुरोमनसिसंहितमेतत् ।
आःपवित्रितकुलैःकिलविज्ञैःकिङ्कृतंनसुकृतम्पुरुपैस्तैः ॥ १९ ॥
शोकनाशनकरीकरुणाब्धेसत्करीन्द्रगमहीपतिवृन्दैः ।
संस्तुतात्रिवलिशालिनिकण्ठेसुस्थिताजयतिसातवविद्या ॥२०॥
येजनाःकुशलदंननुसर्वाऽखर्वपातकहरन्तवनाम ।
सञ्जपन्तिवहुभक्तिसमेतांस्तेजयन्तिकुशलाश्शुभदायिन् ॥ २१ ॥
भक्तपातकहरंसदुदारम्प्रेमपावनमनाविलमाढ्यम् ।
श्रीगुरोपुरुकृपासदनन्तेमानसंविजयतेऽनिशमेव ॥ २२ ॥
त्वंसदाशरणगानतिदीनान्पीनपातकविलुप्तमनीषान् ।

ऽस्यदेवतेत्यण् मन्त्रराजंमन्त्रश्रेष्ठम् पञ्चाक्षरंमन्त्रमिति यावत् असै लक्ष्मीनारायणायकवीन्द्राय अदिशद्ददौ उपदिशतिस्मेतियावत् ॥ १६ ॥

मन्त्रेति सः कवीन्द्रोलक्ष्मीनारायणः एतम्प्रकृतम् गुरुंश्रीठाकुरदत्तशर्म्माणम् अतिमुदासन्मन्त्रलाभजनितेनहर्षातिशयेन स्तौतिस्मअस्तौत् कीदृशस्सः नतोऽतिनम्रः मौलिर्मस्तकंयस्यसतथोक्तः स्पष्टमन्यत् ॥१७॥ दीनेति उपनीत्तसपर्य्यैः विहितपूजनैरितियावत् स्पष्टमन्यत् ॥ १८ ॥ त्वदिति संहितंसंस्थापितम् ध्यातमितियावत् स्पष्टमेवान्यत् ॥ १९ ॥

शोकेति हेकरुणाब्धेकृपासमुद्र शोकनाशनकरी सत्करीन्द्रैरत्युत्तमगजराजैः गच्छन्तिते सत्करीन्द्रगाः गम्लृगतौ अन्यत्रापिदृश्यतइतिडः तेचतेमहीपतयोराजानःतेषाम् वृन्दैस्समूहैः संस्तुता त्रिवलिशालिनिरेखात्रयशोभिते कण्ठे सुस्थिता साप्रसिद्धा तव विद्या जयति ॥ २० ॥

ये इति हेशुभदायिन् सर्वोऽखर्वपातकहरम अखिलमहापातकहृत् इतरत्स्पष्टम्।२१।भक्तेति हेश्रीगुरो तेतव मानसञ्चित्तम् अनिशमेवसर्वदैव विजयते कीदृशंमानसम् अनाविलममलिनम् स्वच्छमितियावत् पु. की. आढ्यम्परिपूर्णम् पु. की. पुरुकृपासदनम् वहुकरुणानिकेतम् अन्यत्स्पष्टम् ॥ २२ ॥

त्वमिति परमासाध्वी सुधाजिदमृतजयिनी वाचाम्वाणीनाम् ततिः परम्परा यस्यसतथोक्तः तत्सम्वुद्धौ हेपरमसाधुसुधाजिद्वाक्तते यद्वा परमइतिपदम्पृ-

हेगुरोपरमसाधुसुधाजिद्वाक्ततेकरुणयाऽवसिमर्त्यान् ॥ २३ ॥
पाहिमामयिगुरो वृजिनाप्तम्पादपद्मशरणम्प्रतिपन्नम् ।
खिन्नमानसममानमिदानीं माननीयवरविद्यलघुत्वम् ॥ २४ ॥
भोगुरोनरकपातभयेनव्याकुलीकृतमनस्यनवद्य ।
अघनाथवरविद्यमयित्वं स्वेजनेकुरुसतीमनुकम्पाम् ॥ २५ ॥
लोकास्तोकाघदलनदक्षं रक्षंसङ्ख्यावद्भिर्विहितनुतिंविख्यातम् ।
आनन्दाम्भःप्रभृतमनःकासारन्त्वामीशानङ्गुरुमहमार्य्यंवन्दे ॥२६॥
एवंस्तुत्वाकविरविनयताहीनोभक्त्यापरिचितहृदयः ।
दीनोद्धारोचितमतिमसकौमान्योऽव्याजं निजगुरुमनमत् ॥ २७ ॥

थक् पीनैर्महद्भिरितियावत् पातकैः पापैः विलुप्तानष्टा मनीषाबुद्धिर्येषान्तान् स्पष्टमन्यत् ॥ २३ ॥

पाहीति माननीयावरा विद्यायस्य सतत्सम्बुद्धौ हेमाननीयवरविद्य यद्वा हे माननीय इतिपृथक्सम्बोधनम् त्वम् माम् इदानीम् लघुशीघ्रम् पाहि कीदृशंमाम् वृजिनाप्तम् पापिनम् वृजिनाप्तमित्यत्र द्वितीयेतियोगविभागात्समासः पु. की. अमानम् चित्तसमुन्नतिहीनम् असत्कारं वा अन्यत्स्पष्टम् लघुक्षिप्रमरन्द्रुतमित्यमरः ॥ २४ ॥

भोइति हेअनवद्यनिर्दोष हेवरविद्य हेनाथ स्पष्टमन्यत् ॥२५॥ लोकेति अहम् लोकानाञ्जनानाम् लोकोजनेचभुवनेइत्यमरः अस्तोकान्यनल्पानि यान्यघानिपापानिदुःखानिवा अघन्तुव्यसनेदुःखेदुरितेचनपुंसकमितिमेदिनी तेषान्दलनेविदारणे नाशइतियावत् दक्षंनिपुणम् रक्षतीतिरक्षस्तम् रक्षपालने पचाद्यच् सङ्ख्यावद्भिःपण्डितैः विद्वान्विपश्चिद्दोषज्ञस्सन्सुधीःकोविदोबुधः धीरोमनीषीज्ञःप्राज्ञस्सङ्ख्यावान्पण्डितःकविः धीमान्सूरिःकृतीकृष्टिर्लब्धवर्णोविचक्षणः दूरदर्शीदीर्घदर्शीत्यमरः विहिताकृता नुतिस्स्तुतिर्यस्यतम् स्तवस्स्तोत्रंनुतिस्स्तुतिरित्यमरः विख्यातम्प्रसिद्धम् आनन्दएवाम्भोजलम् तेनप्रभृतःप्रपूरितः मनएवकासारस्सरोयस्यतम् ईशानंशङ्करस्वरूपम् आर्य्यंश्रेष्ठम् गुरुम्पित्रादिरूपम् गुरुस्त्रिलिङ्ग्यांमहतिदुर्जरालघुनोरपि पुमान्निषेकादिकारेपित्रादौसुरमन्त्रिणीतिमेदिनी त्वाम् वन्दे जलधरमालावृत्तमेतम् मोभःसोमोजलधरमालाऽब्ध्यन्तैरितिलक्षणंवाग्वल्लभे ॥ २६ ॥

एवमिति असको असौ अव्ययसर्वनाम्नामकच्प्राक्टेरित्यकच् अव्याजंनिष्कपटम् क्रियाविशेषणमेतत् स्पष्टमन्यत् भ्रमरविलसितावृत्तम् लक्षणन्तु मोगोनौगोभ्रमरविलसितेतिवाग्वल्लभे ॥ २७ ॥ विद्याइति हेकवेजगति तेतव सकलाःसम्पूर्णाःकलाभिस्सहिताः वा विद्याः श्रीशोभितालक्ष्मी विलास-

विद्यास्तेसकलाभवन्तुजगति श्रीशोभितास्सत्फलाः
कीर्त्तिस्तर्ज्जितशीतरश्मिरमला काष्ठान्तराण्येतु च ।
विश्वेशेकलिकालकल्मषहरेभक्तिप्रसक्तिस्सदा
सूदर्का ऽस्तुकवे ऽपवर्गसुखदोमन्त्रोद्रुतं सिद्ध्यतु ॥ २८ ॥
गुरुणेतिसमीरितमेषवचो रुचिरं विनिशम्यजयन्नियतिः ।
कृतकृत्यमतिर्न्नतिमानाधिकम्प्रमदंमदहीनमनास्समगात् ॥ २९ ॥
विद्वानेषद्रष्टुमनामङ्गलहेतुन्धर्म्मार्थादीष्टप्रदपादामथदेवीम् ।
स्फारोत्कण्ठाधारतयासम्भृतशोभेविन्ध्यंशैलाधीश्वरमालक्ष्यमगच्छत् ।३०।
श्रीदुःखभञ्जनकवीन्द्रतनूजनुःश्रीदेविप्रसादकविनाविहितेनिबन्धे ।
सर्गस्समाप्तिमिहपञ्चम एषलक्ष्मीनारायणीयचरितेरसवत्ययासीत् ३१॥

इति श्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जनशर्म्मात्मज
कविवरदेविप्रसादनिर्म्मिते कौशल्यगोत्रोद्भवकविवर-
लक्ष्मीनारायणजीवनचरितात्मके मङ्गलाङ्के लक्ष्मी
नारायणकाव्ये पञ्चमस्सर्गः ॥ ५ ॥

---

विलसितास्सत्यः सत्फलाउत्तमोदर्काः भवन्तुजायन्ताम् तथा तर्ज्जितशीतराश्मिर्त्तिर्ज्जितामृतांशुः अतिशुभ्रेतियावत् अथच अमलानिर्मला दोषसंसर्गशून्येतियावत् कीर्त्तिर्यशः काष्ठान्तराणिदिगन्तराणिसर्वासुदिशास्वित्यर्थः एतुप्राप्नोतु तथा कलिकालकल्मषहरेकलियुगसमयदुरितनिवारके विश्वेशेत्रिभुवनस्वामिनिश्रीमहादेवे भक्तिप्रसक्तिर्भक्त्यभिनिवेशः सूदर्काशोभनोत्तरकाला सदासर्वदा अस्तुभवतु तथा अपवर्गसुखदःमोक्षानन्दप्रदः मन्त्रः मत्तोलब्धश्शैवोमनुः द्रुतंशीघ्रम् नतुविलम्बेनेत्यर्थः सिद्ध्यतुसिद्धिम्प्राप्नोतु श्रीशङ्करप्रसन्नताफलकोभवत्वितियावत् शार्दूलविक्रीडितञ्छन्दः लक्षणन्तूक्तम्प्राक् ॥ २८ ॥

गुरुणेतीति जयन्तीसर्वोत्कर्षेणवर्त्तमाना नियतिर्भाग्यंयस्यसतथोक्तः एषः कविर्लक्ष्मीनारायणः प्रमदंहर्षम् समगमत् दैवन्दिष्टम्भागधेयम्भाग्यंस्त्रीनियतिर्विधिरिति मुत्प्रीतिःप्रमदोहर्षःप्रमोदामोदसम्मदाइतिचामरः तोटकंवृत्तमेतत् लक्षणन्तु इहतोटकमब्धिसकारकृतमितिवाग्वल्लभे ॥ २९ ॥

विद्वानिति एषःलक्ष्मीनारायणःकविः आलक्ष्यन्दर्शनीयम् शैलाधीश्वरम्पर्वतश्रेष्ठम् विन्ध्यंनाम अगच्छत् कीदृशएषः देवीन्तत्रत्यांविन्ध्येश्वरीम् द्रष्टुंमनोयस्यसः तुङ्काममनसोरपीतिमलोपः पु. की. स्फारोत्कण्ठाधारतयाबहूत्सुकता ऽ-

# षष्ठसर्गप्रारम्भः ।

विश्रुतांश्रितरुचं समुल्लसद्रत्नराजिकरराजितंहितम् ।
विन्ध्यनामकमवन्ध्यपादपैराचितङ्गिरिमसावलोकत ॥ १ ॥
यस्सुमेरुमचलं विभासितं सञ्जिगीषुररुणप्रभारुणैः ।
सानुभिस्समणिवृन्दभानुभिर्भानुमार्गमधिकोन्नतोऽरुणत् ॥ २ ॥
योगुरोःकलशजन्मनस्सुरैः प्रेरितस्यशिरसावचोवहन् ।

भिकरणत्वेन सम्भृतशोभस्सम्पादितरमणीयत्वः स्पष्टमितरत् मत्तमयूरञ्छन्दः तल्लक्षणन्तु वेदैरन्ध्रैर्म्तौयसगामत्तमयूरइतिवाग्वल्लभे ॥ ३० ॥

श्रीति एषःपञ्चमस्सर्गः समाप्तिमयासीदगमत् अन्यद्व्याख्यातम् छन्दस्तु पूर्वमेव ॥ ३१ ॥

इतीतिस्पष्टम् ॥ ५ ॥ इति श्रीस्वकृतस्य कौशल्यगोत्रोद्भव-
कविवरलक्ष्मीनारायणजीवनचरितात्मकस्य लक्ष्मी-
नारायणकाव्यस्य सुमङ्गलाख्यायांव्याख्यायाम्
पञ्चमस्सर्गस्समाप्तः ॥ ५ ॥

---

विश्रुतमिति असौ कविर्लक्ष्मीनारायणः विन्ध्यनामकङ्गिरिम् अलोकत कीदृशङ्गिरिम् विश्रुतङ्ख्यातम् प्रतीतप्रथितख्यातवित्तविज्ञातविश्रुताइत्यमरः पु. की. श्रितरुचंरोचमानम् पु. की. सम्यगुल्लसद्भिः रत्नराजीनाम् करैःकिरणैः राजितम् पु. की. हितमनुकूलम् पु. की. अवन्ध्यपादपैस्सफलवृक्षैः आचितंव्याप्तम् रथोद्धतावृत्तम् लक्षणन्तूक्तम् ॥ १ ॥

यइति योविन्ध्यगिरिः अरुणस्यबालसूर्यस्यअनूरोर्वा अरुणोऽव्यक्तरागेऽर्के-सन्ध्यारागेऽर्कसारथौ निश्शब्देकपिलेकुष्टभेदेनागुणिनित्रिषुअरुणाऽतिविषाश्यामामञ्जिष्ठात्रिवृतासुचेति मेदिनी प्रभया अरुणैरक्तैः मणिवृन्दानाम्भानुभिःकिरणैः सहितैः सानुभिस्समभूभागैःपर्वतैकदेशैः स्नुःप्रस्थस्सानुरस्त्रियामित्यमरः विभासितम् सुमेरुमचलंहेमाद्रिम् सञ्जिगीषुस्सम्यक् जेतुमिच्छुस्सन् अतएव अधिकंसुमेरोस्सकाशादपिबहुतरम् उन्नतउत्थितस्सन् भानोस्सूर्यस्य मार्गम्पन्थानम् अरुणत् अरौत्सीव अरुणदित्यत्र रुधिरआवरणे कर्त्तरिलङ् रुधादिभ्यः श्नम् रथोद्धतावृत्तम् ॥ २ ॥

यइति अतिमानितामतिगौरवमितःप्राप्तोयःविन्ध्याचलः जातुकदाचित् सुरैः श्रीविश्वेश्वरदर्शनोत्सवेनश्रीकाश्यांसमागतैरिन्द्रादिभिरमरैः प्रेरितस्य कलश-

माननीयमतिमानितामितोऽद्यापिनोचलतिजातुभूतलात् ॥ ३ ॥
यत्रलोकजननीजनव्रजभ्राजमानकरपद्मपूजिता ।
दीर्घदुर्घटभटप्रभेदिनीमेदिनीसुरसमूहसंस्तुता ॥ ४ ॥
सायुधाष्टवरबाहुशालिनीवासवादिविबुधालिपालिनी ।
चञ्चलाललितहासभासिनीनास्तिकोद्धतमहासभासिनी ॥ ५ ॥
रोचमानचरणाम्बुजारणन्नूपुरावरविकस्वराम्बरा ।
वारिताघनिचयाजयान्विता प्रोज्ज्वलज्ज्वलनजालजिद्रुचिः ॥ ६ ॥
राजमानरजनीश्वरप्रभापुञ्जतर्ज्जिवदनप्रकाशिनी ।
रूपनिर्ज्जितरतिःकृपावतीवासमिच्छति विलासिनीसदा ॥ ७ ॥
क्लेशपञ्चकविहीनमानसास्तुर्यवर्गमुपलब्धुमिच्छवः ।

जन्मनोऽगस्त्यस्यमुनेर्गुरोः माननीयम् वचोवचनम् शिरसा वहन्दधत्सन् अङ्गीकुर्वन्नितियावत् भूतलात् अद्यापि नोचलतिनोत्तिष्ठति ॥ ३ ॥

यत्रेति यत्रयस्मिन्विन्ध्यगिरौ लोकजननीजगदम्बा देवी सदासर्वदा वासमिच्छतीतिचतुर्थश्लोकेनान्वयः विशेषणानिस्पष्टानि ॥ ४ ॥

सायुधेति कीदृशी सायुधैर्धृतशस्त्रैः अष्टभिःवरैस्सुन्दरैः बाहुभिर्भुजैः शालतेशोभतेतच्छीला वासवादिविबुधालिपालिनीशक्रादिदेवश्रेणीरक्षिणी चञ्चलाललितहासभासिनीविद्युद्वद्रमणीयहसितप्रकाशिनी नास्तिकानांनिजार्चनाऽनास्थानाम् जनानाम् उद्धतागर्विता या महतीसभासमाजः ताम् अस्यतिक्षिपति नाशयतीतियावत् तच्छीला असुक्षेपणेइति धातोस्सुप्यजातावितिणिनिः ॥ ५ ॥

रोचमानेति पु. की. रोचमानचरणाम्बुजाशोभमानपादपद्मा पु. की. रणन्नूपुराखलन्मञ्जीरा पु. की. विकस्वराम्बराभास्वरवसना पु. की. वारिताघनिचयाभक्तजनानाम् दूरीकृतपापनिवहा विनाशितदुःखभरावा अघन्तुव्यसनेदुःखदुरितेचनपुंसकमितिमेदिनी पु. की. जयेनशत्रुविजयेन अन्वितासंयुक्ता पु. की. प्रकर्षेण उच्चैस्त्यन्तम् ज्वलन् दीप्यमानः यः ज्वलनोऽग्निः तस्य जालम् पटलम् जयतीतितथाभूता रुचिर्दीप्तिर्यस्यास्सा ॥ ६ ॥

राजमानेति पु. की. राजमानेन अतएवरजनीश्वरप्रभापुञ्जतर्ज्जिनावदनेन प्रकाशते तच्छीला पु. की. रूपेणसौन्दर्य्येणनिर्ज्जितास्वाधःकृता रतिर्मदनभार्य्यययासा पु. की. कृपावतीनिरुपाधिककरुणाशालिनी पु. की. विलासिनीनिजसखीभिस्सह विलासैकप्रिया ॥ ७ ॥

क्लेशेति क्लेशानामविद्यादीनाम् पञ्चकेनपञ्चसङ्ख्यात्मकसमुदायेन विहीनंशून्यम् मानसञ्चित्तंयेषान्तेतथोक्ताः अविद्यास्मितारागद्वेषाभिनिवेशाःपञ्चक्लेशाः

निर्ज्जितत्रिगुणरंहसोमुदायत्रवासमभियन्तियोगिनः ॥ ८ ॥
यस्य नीलमणिरश्मिसञ्चयैस्सञ्चरत्तमसिकुत्रचित्तटे ।
वासरस्य विहितालयाजनाः कर्त्तुरस्तमुदयन्नजानते ॥ ९ ॥
उज्ज्वलस्फटिकभानुभासिते यस्यनक्तमभिकैः क्वचित्तटे ।
कौमुदीमुदनुभूयते प्रियैर्यौवतैस्सहकुहूतिथावपि ॥ १० ॥
शैवलस्यकपटेनबिभ्रतीकेशपाशमतिमञ्जुलातनुः ।
आननाभशतपत्रशालिनी भ्रूविलासिवरवीचिमालिनी ॥ ११ ॥
तारकारुचिमधुव्रतास्पदश्वेतसञ्चलितपद्मलोचना ।
मेचकोत्पलवतंसभासिनीद्वीपरूपकुचयुग्मकाशिनी ॥ १२ ॥

इतियोगसूत्रम् तुर्यवर्गश्चतुर्थवर्गम् मोक्षमित्यर्थः त्रिवर्गोधर्म्मकामार्थैश्चतुर्वर्गः समोक्षकैरित्यमरः उपलब्धुम्प्राप्तुम् इच्छवोऽभिलाषिणः विन्दुरिच्छुरितिनिपातनादिच्छुशब्दस्सिद्धः निर्ज्जितम् त्रयाणाङ्गुणानांसत्त्वादीनाम् रंहोवेगोयैस्तेतथोक्ताः योगिनः युञ्जानायुक्ताश्चेतियावत् मुदाहर्षेण यत्रविन्ध्याचले वासम् अभियन्तिप्राप्नुवन्ति ॥ ८ ॥

यस्येति नीलमणिरश्मिसञ्चयैरिन्द्रनीलमणिकिरणसमूहैः सञ्चरत्तमसिविशिष्टप्रसारान्धकारे यस्यविन्ध्याचलस्य कुत्रचित्तटेविहितालयाःकृतनिकेताजनाः वासरस्यदिवसस्य कर्त्तुर्विधातुः सूर्य्यस्य उदयम्प्रादुर्भावम् अस्तमन्तर्द्धानञ्च नजानते तत्र सर्वदाऽन्धकारसद्भावात् अद्यदिवसोऽद्यरात्रिरितिज्ञानशून्याः भवन्तीतियावत् ॥ ९ ॥

उज्ज्वलेति उज्ज्वलानांस्वच्छानाम् स्फटिकानांशुभ्रमणिविशेषाणाम् भानुभिःकिरणैः भासितेप्रकाशिते यस्यविन्ध्यस्य क्वचित्कस्मिंश्चित् तटे अभिकैःकामुकैःपुरुषैःकर्त्तृभिः कामुकेकमिताऽनुकः कम्रःकामयिताऽभीकःकमनः कामनोऽभिकइत्यमरः प्रियैःप्रीतिपात्रैः यौवतैर्युवतिसमूहैः सहसार्द्धम् कुहूतिथौ अमावास्याविशेषे अपिनक्तंरात्रावपि कौमुदीमुत् चन्द्रिकाहर्षः अनुभूयते सादृष्टेन्दुस्सिनीवालीसानष्टेन्दुकलाकुहूरित्यमरः ॥ १० ॥

शैवलस्येति तनुःकृशा आननाभेनमुखसदृशेन शतपत्रेणकमलेन शालतेशोभतेतच्छीला भ्रुवाविवविलासिन्यौ वरेशोभने वीचीतरङ्गौ द्वेपवद्वयोःकूलयोस्तनुत्वात् इतियावत् मलते धारयतीतितच्छीला मलमल्लधारणेइतिमलधातोस्ताच्छील्येणिनिः इतरत्स्पष्टम् ॥ ११ ॥

तारकेति तारकारुचेरक्षिकनीनिकासदृशस्य मधुव्रतस्यभ्रमरस्य आस्पदेस्थानभूते श्वेतेशुभ्रे सञ्चलिते येपद्मेकमले तेएव लोचनेयस्याः सा मेचकेनीलवर्णे येउत्पलेकमले ते अवतंसाविव कर्णपूराविव एकवचनव्याख्यायाम् शेख-

नीरविभ्रमणनाभिशोभिता सारसालिरशनाघनद्युतिः ।
श्रीनिधानजघनोपमाक्षमभ्राजमानपुलिनालिसङ्कुला ॥ १३ ॥
पाणिपादसमशोणपङ्कजाराजहंसरमणीयहंसका ।
यत्रकापिरमणीवनिम्नगामन्दमन्दमुपसर्प्पतिप्रियम् ॥ १४ ॥
चारुपुष्करतयाविराजितः सारवान्मधुकरान्दधत्सदा ।
सम्मदप्रदलसन्महाकरोवारणेन्द्रइवयः प्रकाशते ॥ १५ ॥
प्रज्वलन्मणिगणोल्लसच्छिरानागवृन्दपरिवारितोगतः ।

रइव ताभ्यान्तेनवा भासतेतच्छीलासातथोक्ता पुंस्युत्तंसावतंसौद्वौकर्णपूरे च शेखरेइत्यमरः द्वीपरूपेणान्तरीपमयेन कुचयुग्मेन काशतेइतितच्छीला अत्रकमलद्वयन्द्वीपद्वयञ्चसम्भावनीयम् ॥ १२ ॥

नीरविभ्रमणंनाभिरिव तयाशोभिता सारसानांयुग्मपक्षिविशेषाणाम् आलिः पङ्क्तिरेव रशनामेखलायस्यास्सा घनानिविडा द्युतिर्दीप्तिर्यस्यास्सा यद्वा घनस्यमेघस्य द्युतिरिवद्युतिर्यस्याःसा श्रीनिधानंशोभाधाम जघनस्योपमायाम् क्षमम् भ्राजमानम् पुलिनम् यस्यास्साअलिभिर्भ्रमरैः सङ्कुला शोभितेतियावत् रमणीपक्षे आलिसङ्कुलासखीसहितेतियावत् ॥ १३ ॥

पाणीति राजहंसाहंसविशेषाएव रमणीयाःहंसकाःपादकटकाः यस्यास्सा राजहंसास्तुतेचञ्चुचरणैर्लोहितैस्सिताइति हंसकःपादकटकइतिचामरः यत्र विन्ध्यगिरौ निम्नगानदी प्रियंसमुद्रम् रमणीव सुन्दरीनायिकेव उपसर्पति अभिसरति रमणीपक्षस्तुस्फुटएवप्रतिभाति ॥ १४ ॥

चार्विति योविन्ध्यगिरिः वारणेन्द्रइवगजेन्द्रइव सदानित्यम् प्रकाशते कीदृक् चारूणिरमणीयानि पुष्कराणिजलानिकमलानिचयस्मिन् सः तस्यभावः चारुपुष्करता तस्यभावस्त्वतलावितितल् स्त्रीत्वात् टाप् तया विराजितश्शोभितः पु. की. सारवानारवेणसहितान् शब्दायमानानितियावत् मधुकरान्भ्रमरान् दधद्धारयन् दधदित्यत्र डुधाञ्धारणपोषणयोरित्यस्माद्धातोर्लट् लटश्शतृशानचावित्यादिना शता नाभ्यस्ताच्छतुरितिनुमभावः पु. की. सम्मदप्रदाहर्षप्रदाः लसन्तःप्रकाशमानाः महान्तोविशालाः आकराःखनयः यस्मिन्सः वारणेन्द्रपक्षेतु चारुपुष्करतयारमणीयशुण्डाग्रभागवत्त्वेन विराजितः तथा सारवानतिबलः तथा मधुकरान्भ्रमरान् मदगन्धलुब्धानितियावत् दधत् कुम्भस्थलादौधारयन् तथा सम्यक् मदन्दानम् मदोरेतस्यहङ्कारेमद्येहर्षेभदानयोरितिहेमचन्द्रः प्रददातीति तथा डुदाञ्दाने प्रेदाज्ञइतिकःप्रत्ययः लसन् महान्अतिस्थूलदीर्घःकरश्शुण्डादण्डोयस्यसतथोक्तः ॥ १५ ॥

प्रज्वलन्मणीति योविन्ध्याचलः इह भूतले शेषसाम्यमधिगच्छति कीदृशः प्रज्वलद्भिर्म्मणिगणैः उल्लसन्ति शिरांसिशिखराणियस्यसतथोक्तः पु. की. ना-

भूधरत्वमतिसत्त्वसम्भृतश्शेषसाम्यमधिगच्छतीहयः ॥ १६ ॥
यत्रलोचनमनस्सुखप्रदास्सञ्चरन्तिपरितश्चमूरवः ।
श्रूयते भगवतीमुपासितुञ्चायताक्षितिभृताञ्चमूरवः ॥ १७ ॥
यत्रतत्तदवनीरुहश्रिया सम्भृतोवसतिवर्जितक्रमः ।
दीनदीर्घदरवारदारिणीं सेवितुम्भगवतीमृतुव्रजः ॥ १८ ॥
तत्रकिंशुकवनीविकाशित म्फुल्लपङ्कजरजश्चकासितम् ।
मन्दशीतलसमीरसेवितः पूर्वतस्ससुरभिंसमैक्षत ॥ १९ ॥
यत्रकोकिलकुलाकुलङ्कलस्वानकृत्कलितकालिमाऽलिनाम् ।
पादपान्तरसुखङ्कदम्बकंनोसमेत्यसहकारमिच्छति ॥ २० ॥
यत्रमञ्जुलरसालमञ्जरी पञ्जरीकृतमहामहीरुहा ।

गानाङ्गजानाम् वृन्दैःपरिवारितः नेतिपृथक्पदंवा पु. की. नापुरुषः पु. की. अगानाम्वृक्षाणाम्पर्वतानाञ्च वृन्दैः परिवारितोयुक्तः पु. की. भूधरत्वम् गतः प्राप्तः पु. की. अतिशयेन सत्त्वैर्नानाविधैःप्राणिभिः सम्भृतोव्याप्तः शेषपक्षेतु शिरांसिफणाः नागाःसर्पाः भूधरत्वम्पृथिवीधारकत्वम् सत्त्वम्बलम् ॥ १६ ॥

यत्रेति यत्रविन्ध्याद्रौ लोचनानान्द्रष्टॄणांनेत्राणांमनसाञ्च सुखप्रदाआह्लादजनकाः चमूरवोमृगविशेषाः परितस्सर्वतः सम्यक् चरन्ति गच्छन्ति तृणानि अदन्तिवा तथाच भगवतीन्तत्रत्याञ्जगदम्बिकाम् उपासितुंसेवितुम् आयतामागच्छताम् क्षितिभृताम्भूपालानाम् चमूरवस्सेनाकोलाहलः श्रूयते जनैरितिशेषः१७

यत्रेति तैचते सर्वर्तुसम्भवाइतियावत् अवनीरुहावृक्षाः तेषांम् श्रीः शोभासम्पत्तिर्वा तया सम्भृतःपूर्णः वर्जितक्रमोयुगपदेववर्त्तमानइतियावत् ऋतूनांवसन्तादीनाम् व्रजस्समूहः दीनानामशरणानाञ्जनानाम् दीर्घदरवारदारिणींदुःखभयसमूहविनाशिनीम् भगवतीन्देवीम् सेवितुम् वसति ॥ १८ ॥

तत्रेति तत्रविन्ध्याचले मन्दशीतलसमीरसेवितोधीरशिशिरवातसंसर्गहृष्टः सः कवीन्द्रो लक्ष्मीनारायणः पूर्वस्यान्दिशि प्रथमंवा किंशुकवन्यापलाशवाटिकया विकाशितम् अथच फुल्लानांविकसितानाम् पङ्कजानाङ्कमलानाम् रजोभिःपरागैः चकासितंशोभितम् सुरभिंवसन्तम् समैक्षतापश्यत् ॥ १९ ॥

यत्रेति यत्रवसन्ते कलस्वानकृन्मधुरशब्दकरम् कलितकालिम कृष्णवर्णम् अलिनाम्भ्रमराणाम् कदम्बकंवृन्दम् कर्तृ कोकिलानाम्पिकानाम् कुलैस्समूहैः आकुलंयुक्तम् सहकारमतिसौरभमाम्रवृक्षम् समेत्यप्राप्य पादपान्तरसुखमन्यवृक्षस्थितिजनितमानन्दम् नोइच्छतिनाभिलषति ॥ २० ॥

यत्रेति यत्रवसन्ते पञ्जरीकृतःस्वसंयोगेनपीतवर्णीकृतः महान् महीरुहोवृक्षः ययासा मञ्जुलारमणीयाचासौ रसालमञ्जरी आम्रवल्लरी कामिनीजनवतंसतां-

कामिनीजनवतंसताङ्गतालोकलोचनमुदम्प्रयच्छति ॥ २१ ॥
चण्डभास्करकरोत्करन्दलन्मल्लिकाभरमतल्लिकाकरम्।
धूलिधूसरितघोरमारुतश्चारुतायुतशिरीषपादपम् ॥ २२ ॥
आतपातिशयविह्वलीकृतस्वान्ततान्तहरिणव्रजाङ्कितम्।
क्षीणवारिसरितं शुचिंशुचिस्सच्छुचिश्शुचिसमोददर्शसः ॥ २३ ॥
नूतनाभ्रपटलाविलाम्बरा विद्युदुज्ज्वलितसर्वदिङ्मुखा।
एधमानमदनृत्यदानदद्बर्हिणोपचितभूधरद्युतिः ॥ २४ ॥
शक्रगोपनिचयारुणीकृतक्ष्मातलाविलसितावलाकया।
पीतकेसरकदम्बशोभिनी प्रावृडैक्षिकविनाऽमुनाततः ॥ २५ ॥

ललनाकर्णाभरणत्वम् गताप्राप्तासती लोकलोचनमुदन्द्रष्टृजननयनानन्दम् प्रयच्छतिदिशति ॥ २१ ॥

चण्डेति चण्डःप्रोत्कटः भास्करकराणांसूर्यकिरणानाम् उत्करस्समूहोयस्मिन् तमूदलन्तीनांविकसन्तीनाम् मल्लिकाभरमतल्लिकानाम्प्रशस्तयूथिकासमूहानाम् आकरमास्पदमितियावत् तथा धूलिभिः धूसरिताः ईषत् पाण्डुरीकृताः घोरास्तीव्राः मारुताघाताः यस्मिंस्तम् तथाच चारुतायुतादर्शनीयाः शिरीषपादपायस्मिन् सतथोक्तस्तम् ॥ २२ ॥

आतपेति आतपस्यातिशयेन विह्वलीकृतंव्याकुलीकृतम् स्वान्तंमनोयेषान्तेतथोक्ताः अतएवतान्ताःक्लान्ताः येहरिणव्रजामृगसमूहाः तै अङ्कितश्चिह्नितम् शोभमानमित्यर्थः तथाच क्षीणवारयश्शुष्कनीराः सरितोनद्यः यस्मिन्सतम् शुचिम् ग्रीष्मसृतुम् कर्म्म शुचिःउज्ज्वलःपवित्रोवा सतीसमीचीना रुचिःकान्तिर्यस्यसतथोक्तः शुचिसमःपावकाभः अतितेजस्वीत्यर्थः सः कवीन्द्रोलक्ष्मीनारायणः कर्त्ता ददर्श ॥ २३ ॥ युग्ममिदम्।

नूतनेति नूतनैस्सजलैः कृष्णवर्णैरितियावत् अभ्रपटलैर्म्मेघमण्डलैः आविलंमलिनम् अम्बरंव्योमयस्याम् सा विद्युद्भिः उज्ज्वलितानि सर्वदिङ्मुखानिसकलाशाग्रभागाः यस्यांसा तथा एधमानोवर्द्धमानः मदोगर्वः येषान्तेतथोक्ताः अतएव नृत्यन्तोनर्त्तनङ्कुर्वन्तः तथा आसमन्तात् नदन्तःकूजन्तोयेबर्हिणामयूराः तैः उपचिता भूधराणाम्पर्वतानाम् रुचिर्दीप्तिः शोभेतियावत् यस्यांसा२४

शक्रेति शक्रगोपानामिन्द्रगोपानाम् अरुणवर्णकीटविशेषाणाम् निचयैस्समूहैः अरुणीकृतम् क्ष्मातलम्भूतलम् यस्यांसा तथावलाकयावकपङ्क्त्या विलसिताशोभमाना तथा पीतकेसरैःपीतवर्णकिञ्जल्कैः कदम्बैःकदम्बपुष्पैः शोभतेतच्छीला प्रावृड्वर्षर्त्तुः अमुनाप्रकृतेन कविना लक्ष्मीनारायणेन ऐक्षि दृष्टा॥२५॥ युग्ममेतत्॥

विस्फुरत्पुरुपरागरागभृद्वारिजातचयचारुलक्षणा ।
शोभमानकलहंसमण्डलीमण्डनासितघनाजनप्रिया ॥ २६ ॥
खञ्जरीटकमनीयतायुताकाशमाननवकाशभासिता ।
निर्म्मलाचलनदीजलाबलादाजहारशरदस्यमानसम् ॥ २७ ॥
सद्द्वादशात्मापिदिवाकरोऽयं मन्दायतेयत्रगतप्रतापः ।
तंसोऽतिशीतानिलजातकम्पोहेमन्तकालं कलयाञ्चकार ॥ २८ ॥
सुसारशकलामलाभचपलद्विरेफकुलशालिकुन्दकलिकम् ।
विकाशिलवलीविलासललितं विलोक्यशिशिरन्ततस्समुमुदे ॥२९॥

विस्फुरदिति विस्फुरन्विकसन् पुरुपरागभृद्बहुरजोऽरुणिमयुक्तः वारिजातचयःपद्मवृन्दम् एवचारुरमणीयम् लक्षणंयस्यास्साशोभमाना कलहंसानांहंसविशेषाणाम् मण्डलीसमूहएव मण्डनमलङ्कारः यस्यास्सा सितानिर्ज्जलत्वाच्छुभ्रवर्णाः घनामेघायस्यांसा तथा जनप्रिया सकललोकमनोरमा ॥ २६ ॥

खञ्जरीटेति खञ्जरीटानाम् खञ्जरीटैर्वाया कमनीयतामनोहरता तयायुतासहवर्त्तमाना काशमानैःप्रकाशयुतैः नवैःकाशैःकाशनामकतृणविशेषपुष्पैः भासितादीप्तिमती निर्म्मलानिस्वच्छानि अचलानिस्थिराणि नदीजलानि यस्यांसा शरदृतुः अस्य प्रकृतस्य कवीन्द्रस्य लक्ष्मीनारायणस्य मानसंमनः बलात्प्रसह्य आजहारहरतिस्म ॥ २७ ॥ युग्ममेतत् ।

सदिति सन्तोविद्यमानाः द्वादश आत्मानश्शरीराणियस्यसतथोक्तोपि आत्मापुंसिस्वभावेऽपिप्रयत्नमनसोरपि धृतावपिमनीषायांशरीरब्रह्मणोरपीतिमेदिनी अयम् दिवाकरोऽपिदिनविधाय्यपि यत्र ऋतौ गतोनष्टः प्रकृष्टस्तापोयस्य सतथोक्तस्सन् मन्दायते शिथिलतेजस्कइवाचरति सः कवीन्द्रोलक्ष्मीनारायणः तम् हेमन्तकालंहेमन्ताख्यमृतुमित्यर्थः कलयाञ्चकारज्ञातवान् कीदृशस्सः अतिशीतेनानिलेनवातेन जातःकम्पः रोमाञ्चपूर्वकङ्कम्पनम् यस्यसः सद्द्वादशात्मेतिपाठे द्वादशभिरात्मभिस्सहितइत्यर्थः इन्द्रवज्रावृत्तम् लक्षणन्तु स्यादिन्द्रवज्रायदितौजगौगइतिवाग्वल्लभे ॥ २८ ॥

ततः सः कवीन्द्रोलक्ष्मीनारायणः सुसारस्येन्द्रनीलमणेः शकलानिखण्डानि इव अमलानिर्म्मला आभाकान्तिर्येषान्ते एवम्भूताः चपलायेद्विरेफाभ्रमराः तेषाम् कुलैस्समूहैः शालन्तेशोभन्तेतच्छीलाः कुन्दानांमाघ्यपुष्पाणाम् कलिकाःकोरकाः यस्मिंस्तम् कलिकाकोरकःपुमानित्यमरः तथा विकाशिनीनाम् लवलीनाम् हरफारेवडीतिप्रसिद्धानान्तरूणाम् विलासेन ललितंसुन्दरम् शिशिरंनाम ऋतुम् विलोक्य मुमुदे हर्षम्प्रापत् सुसारेत्यत्र सुनीलमणिकोमलाभेतिवापाठः- जलोद्धतगतिनामकंवृत्तम् लक्षणन्तु जसौजसयुतौजलोद्धतगतिरितिवाग्वल्लभे२९

गत्वातत्रोमन्दिरमाशुदेव्यास्सन्मङ्गलश्रीर्विलसत्पताकम् ।
संसारकान्तारजनावनज्ञान्तामीश्वरीमेषमुदाददर्श । ३० ॥
श्रीदुःखभञ्जनकवीन्द्रतनूजनुःश्रीदेविप्रसादकविनाकृतितेनिबन्धे ।
सर्गेस्समाप्तिमिहसद्रमणीयलक्ष्मीनारायणीयचरितेऽगमदेषषष्ठः ॥३१॥

इति श्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जनशर्म्मात्मज कविवरदेविप्रसादनिर्म्मिते कौशल्यगोत्रोद्भवकविवर लक्ष्मीनाराणजीवनचरितात्मके मङ्गलाङ्के लक्ष्मी-नारायणकाव्येषष्ठस्सर्गः ॥ ६ ॥

---

गत्वेति ततः ऋतुदर्शनानन्तरम् सन्मङ्गलश्रीः एषः प्रक्रान्तः कविवरोलक्ष्मी-नारायणः विलसन्त्योदेदीप्यमानाः पताकाध्वजाः यस्ययस्मिन्वा तत् देव्याःश्री-विन्ध्येश्वर्याः मन्दिरंसद्म गत्वाप्राप्य संसारएवकान्तारन्दुर्गमंवर्त्म तस्यतत्र-त्यायेजनाः तेषाम् अवनंरक्षणम् जानातीतिताम् ताम् ईश्वरींसर्वसमर्थाम्भग-वतीं मुदाहर्षेण ददर्शपश्यतिस्म इन्द्रवज्रा वृत्तम् ॥ ३० ॥

श्रीति इह निबन्धे एषः षष्ठस्सर्गः समाप्तिमगमत् इतरत्पूर्ववत् वसन्तति-लकावृत्तम् ॥ ३१ ॥ इतीतिस्पष्टम् ॥ ६ ॥

इती श्री स्वकृतस्य कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायण-जीवनचरितात्मकस्यमङ्गलाङ्कस्य लक्ष्मीनारायणकाव्यस्य सुमङ्गलाख्यायांव्याख्यायाम् षष्ठस्सर्गस्समाप्तः ॥ ६ ॥

---

# सप्तमसर्गप्रारम्भः ।

ततस्ततश्रीर्विधिवत्प्रपूज्यतामुपायनैर्विश्वजनीनमानसाम् ।
प्रसन्नचेतानतकन्धरः करौविनीयकर्तुंसनुतिम्प्रचक्रमे ॥ १ ॥

ततइति ततोदर्शनानन्तरम् तताविस्तृता श्रीर्विद्यादिसम्पत्तिर्यस्यसः प्रस-न्नचेताहृष्टमनाः नतकन्धरोनम्रग्रीवः सःकवीन्द्रोलक्ष्मीनारायणः विश्वस्मैसर्वस्मै जनाय हितम् मानसंयस्यास्ताम् तांश्रीविन्ध्येश्वरीन्देवीम् उपायनैर्नानाविधा-भिरुपदाभिः विधिवत् प्रपूज्य तथा करौहस्तौ विनीय अञ्जलिम्बद्ध्वेतियावत्

अहंकमन्दःकृतवागणेयताङ्गतागुणाद्देविमताः सतामये।
तथाऽपिकर्त्तुंनुतिमुत्सुकं मनोयुनक्तिवाचावदनम्बलादिदम्॥ २॥
त्वमम्बसम्बाधितमुद्धतैर्दितेरिदन्तनूजैः कृपयाजगत्त्रयम्।
रिरक्षिषुर्भूरिभयम्भयङ्करै रनेकरूपाणिदधासिसर्वदा॥ ३॥
जयत्यजस्रञ्चरणारविन्दयो रजोभवत्याभवभीतिहारितत्।

नुतिंस्तुतिम् कर्त्तुम् प्रचक्रमेप्रारेभे विश्वजनीनेत्यत्र आत्मन्विश्वजनभोगोत्तर-पदात्खः आयनेयीनीयीयःफढखच्छघाम्प्रत्ययादीनामितीनादेशः प्रचक्रमइत्यत्र-प्रपूर्वात्क्रमुपादविक्षेपेइत्यस्माद्धातोः प्रोपाभ्यांसमर्थाभ्यामित्यात्मनेपदम् कर्त्तरि-लिट्वंशस्थंवृत्तम् लक्षणन्तूक्तमेव॥ १॥

अहमिति अयं इतिकोमलामन्त्रणे हेदेवि मन्दोमूढोऽहम् क तथा तव अग-णेयतामगण्यत्वम् गताःप्राप्ताः अपारमेयाइतियावत् सतांविदुषाम् मताः उत्तम-त्वेनसत्कृताः शौर्यौदार्यगाम्भीर्यधैर्यस्थैर्यप्रभृतयोगुणाः क द्वौकशब्दौ परस्पर-स्यमहदन्तरालंसूचयतः तथापिएवंसत्यपि नुतिन्त्वदीयांस्तुतिम् कर्त्तुम् उत्सुकम् समुत्काण्ठतम् त्वद्गुणमाहात्म्यातिशयप्रभावप्रेरितमितियावत् इदम् मदीयम् मनः कर्त्तृ बलात्प्रसह्य इदम् मम वदनंमुखम् कर्मवाचावाण्या युनक्तियोजयति अगणेयतामित्यत्र गणसङ्ख्यानेइतिचुरादिगणान्तरिताण्णिजन्ताद्धातोः अचोयत् सञ्ज्ञापूर्वकोविधिरनित्यइति णिलोपाभावः पश्चाद्गुणः चिन्तिपूजिक-थीत्यादिना अङ्विधानाद्गुणाभावार्थाद्वा अन्यथा अप्रत्ययादित्यनन्तरम्पठित्वा अकारमेवबिदध्यात् यत्तु अप्रत्ययादिति अकारेप्राप्ते गुणाभावार्थम् अङ्विधान-मितिमुकुटेनोक्तम् तच्चिन्त्यम् ण्यासश्रन्थोर्युच इतियुचा अप्रत्ययस्यबाधात् यद्वा-गणेरेयइत्यौणादिकेनसूत्रेणसिद्धिः गणनीयेतुगणेयंसङ्ख्यातेगणितमित्यमरः॥२॥

त्वमिति हेअम्बमातः भयङ्करैर्भीषणस्वरूपैः उद्धतैरतिगर्वितैः दितेस्तनूजै-र्दैत्यैः सम्बाधितंसम्यक्पीडितम् भूरिबहु भयंयस्यतत् इदम् जगत्त्रयम् कृपया रिरक्षिषुः रक्षितुमिच्छुः सती रक्षपालनेइतिधातोः धातोःकर्म्मणस्समानकर्त्तृ-कादिच्छायांवेतिसन् सनाशंसभिक्षउरित्युःप्रत्ययः अनेकरूपाणि सर्वदा समये-समये दधासिधारयसि भयङ्करैरित्यत्र मेघर्त्तिभयेषुकृञइतिखच् अरुर्द्विषदजन्त-स्यमुम् इतिमुमागमः॥ ३॥

जयतीति हे अम्ब भवत्यास्तव चरणारविन्दयोःतत् रजोरेणुः अजस्रंनित्यम् जयति सर्वोत्कर्षेणवर्त्तते कीदृशंरजः भवभीतिहारिसंसारभयनिवारकम् तत्किम् यत् कर्म आत्मभूशक्रपुरस्सरामरैः ब्रह्मेन्द्रप्रभृतिदेवैः कर्त्तृभूतैः आनम्रतरैरति-नतैः शिरोभिःस्समुकुटैर्मूर्द्धभिः करणैः सम्यक् उह्यतेध्रियते संपूर्वात् वह प्रापणे कर्म्मणिलट् वचिस्वपियजादीनाङ्कितिइतिसम्प्रसारणम् आनम्रतरैरित्यत्र

यदात्मभूशक्रपुरस्सरामरैश्शिरोभिरानम्रतरैस्समुन्नते ॥ ४ ॥
सतीसतीक्ष्णप्रतिभाप्रभावती प्रभावतीव्रोत्तमरूपराजिता ।
पराऽजितादुष्टमलाविलासिनी विलासिनीशाभुवनानिशासती ॥५॥
नयान्वितोदारदयामयाशयाशयाभयाप्रोल्लसितासिताऽभया ।
सदोदयादिव्यसदोदयाजयाऽलयाऽधिविन्ध्याचलमञ्जुलालया ॥६॥
उदारसारादरदारिणीरणे रणद्वलारीणरिपुप्रहारिणी ।
सुरासुरार्च्यापरिभासुराऽसुराकराकराकारकरान्नराविनी ॥ ७ ॥

आङ्पूर्वात् णमप्रह्वत्वे इतिधातोः नमिकम्पिस्म्यजसिकमहिंसदीपोरद्रतिरः प्रत्ययः द्विघत्रनंविभज्योपपदेतरवीयसुनाविति तरप् अजस्रमित्यत्रापि नञ्पूर्वात् जसेरुक्तसूत्रेणवरःप्रत्ययः ॥ ४ ॥

सतीति सतीसमीचीना तीक्ष्णाचासौ प्रतिभानवनवोन्मेषशालिनीप्रज्ञा तया सहिता प्रज्ञानवनवोन्मेषशालिनीप्रतिभामतेतिरुद्रः प्रभावतीकान्तिकान्ता प्रभावेण तीव्रंशत्रुदुस्सहम् यद्रूपम् तेनराजितादीपिता परासर्वोत्कृष्टा अजिता-शत्रुभिरपराजिता दुष्टाश्चतेमलैःपापैराविलामालिनाः दुष्टमलैरत्युग्रपापैराविला-वा तानस्यतीतितच्छीला असुक्षेपणे ताच्छील्येणिनिः मलोऽस्त्रीपापविट्-किट्टेकृपणेत्वभिधेयवदितिमेदिनी विलासिनीनाम् ईशास्वामिनी यद्वा विलासि नीतिपृथक्पदम् भुवनानिलोकान शासती शासुअनुशिष्टौ वर्त्तमानेलट् लटश्श-तृशानचावित्यादिना शता उगितश्चेतिङीप् जक्षित्यादयःषडितिनुमभावः ॥ ५ ॥

नयेति नयेननीत्या विचार्यकारितयेतियावत् अन्वितायुक्ता उदारोमहान् दयामयःकृपासंस्कृतः आशयोऽभिप्रायोयस्यास्सा शययोःपाण्योः शयानाम्पणी-नांवा आभयारक्तप्रभया प्रोल्लसिता पञ्चशाखश्शयःपाणिरित्यमरः सिताशुभ्रय-र्णाअभयाशत्रुभ्योनिर्भया सदासर्वदा उदयोऽभ्युदयोयस्यास्सा दिव्यस्य सद्-सस्सभायाः दयतेइतिदया रक्षाकृत् दयदानगतिरक्षणहिंसाऽऽदानेषु इतिरक्ष-णार्थे पचाद्यच् जयतीतिजयाजिजये पचाद्यच् यद्वा अजया नास्ति शत्रुकर्तृको-जयोयस्यास्सातथोक्ता न लयोनाशोयस्यास्सा अधिविन्ध्याचलम् विन्ध्याचले-इतियावत् मञ्जुलोऽतिरमणीयः आलयोमन्दिरम् यस्यास्सा ॥ ६ ॥

उदारेति उदारोमहान् सारस्सत्त्वम् यस्यास्सादरम्भयम् दारयतीतितच्छी-ला रणेयुद्धे रणतोगर्ज्जतः वलारीणान् शक्तिपूर्णान् रिपून्अरीन् प्रहरतितच्छी-ला सुराणामसुराणाञ्चऽअर्च्यापूज्या परितस्सर्वतः भासुराप्रकाशमाना असून्प्रा-णान् रातिप्रददातीति असुरा कराणाङ्किरणानाम् आकरःखनिः आकारोमूर्त्तिर्यस्य एवम्भूतः करोहस्तः यस्यास्सा यद्वा कराणाङ्किरणानाम् आकरःखनिः आकारो-यस्यास्साचासौ कराकार्य्यकारिणी सुखप्रदाच यद्वा कराकरस्यकिरणखनेः

सहासहारावलिभासुदुस्सहा ज्वलन्महामोदवहामहामहा ।
मुदामुदग्रा समुदायदायिनीसदाननास्वस्सदघायदायिनी ॥ ८ ॥
शुभात्मनीनामुनिमानितामनोरमासुमन्दस्मितलीनचन्द्रिका ।
सभानुताभानुशतैस्सभानुताविराजते मूर्त्तिरियन्तवाम्बिके ॥९॥ कुलकम्
त्वमेवकल्याणि जगत्त्रयम्पुरा सृजस्यथोपासिततोनिहंसियत् ।
अतोमहीमोदकृतामहीयसीस्त्वदीयलीलावदवेदकोऽपिकिम् ॥१०॥
भयान्धकारम्भवभीतिधारिणांनृणामुदस्यप्रथितोमहापृथुः ।
विकाशयन्दीनजनाननाम्बुजम्प्रतापसूर्यस्तपतीहतेऽनिशम् ॥११॥

आकारस्य कराकर्त्री नरान् अवति उपद्रवेभ्योरक्षतीतितच्छीला परिभासुरेत्यत्र भञ्जभासमिदोघुरजितिभासोघुरच् प्रत्ययः ॥ ७ ॥

सहासेति सहासा हासनप्रकाशेनेतियावत् सहिता हारावलिभायस्यास्सा यद्वा सहासान्त्रासौहारावल्या भातीतितथाविधा सुतरान्दुस्सहाषहमर्षणे ईषद्दुःसुकृच्छ्राकृच्छ्रार्थेषुखल् ज्वलन्महत्तेजोयस्यास्सा मोदवहाहर्षवती महान् महउत्सवोयस्यास्सा उदग्रासमुन्नता उत्कटावा मुदांहर्षाणाम् समुदायम् ददातीतितच्छीला सदुत्तमम् दर्शनमात्रदुःखहरम् आननंमुखम् यस्यास्सा स्वस्स्वर्गेसीदन्तीतिस्वस्सदोदेवाः तेषाम् अघायन्दुःखविस्तारम् द्यतिखण्डयतीतिसातथोक्ता दोअवखण्डने आतोऽनुपसर्गेकः अयिनीशुभावहाविधिविशिष्टा भायिनीलाभवती ज्ञानवतीवा ॥ ८ ॥

शुभेति हेअम्बिके शुभा शुभविशिष्टा शुभकारिणीवा आत्मनेहिता आत्मनीना आत्मन्विश्वजनभोगोत्तरपदात्खइतिखः आत्माध्वानौखेइतिप्रकृतिभावः आयनेयीत्यादिना ईनादेशः पश्चात् टाप्मुनिमानिता मनोरमाभक्तमनोहारिणी सु शोभनेन मन्दस्मितेन शोभनेमन्दस्मिते वा लीनाऽन्तर्हिता चान्द्रिकाज्योत्स्नायस्याःसा सभयादेवादिसदसा नुतास्तुता यद्वा सभादीप्तिसाहिता तथा नुताभानुशतैःकिरणशतैःकृत्वा भानुतयासूर्यत्वेन सहिता इयम् तव मूर्त्तिःप्रतिमा विराजते कुलकम् ॥ ९ ॥

त्वमिति हेकल्याणि यद्यतोहेतोः त्वमेव पुरापूर्वम् जगत्त्रयम् सृजसि अथ पासि योगक्षेमाभ्याम् रक्षसि ततस्तदनन्तरम् निहंसि अतोऽस्माद्धेतोः कोऽपिकश्चिदपि ब्रह्माऽपिवा महीमोदकृतःपृथ्वीहर्षकारिणीः महीयसीरतिमहतीः त्वदीयलीलाः किम् वेद जानातिवद कथय वाक्यार्थःक्रमः ॥ १० ॥

भयेति इह तेतव प्रथितःप्रसिद्धः महापृथुरतिविशालः प्रतापसूर्यःप्रतापमार्त्तण्डः भवभीतिधारिणाम् नृणाम् भयमेव अन्धकारस्तम् उदस्यनिवार्य दीनजनानाम् आननाम्बुजंमुखकमलम् विकाशयन्सन् अनिशम् जपति ॥ ११ ॥

त्वमेवलक्ष्मीर्हरिणाऽधिमानिता त्वमेवगौरीशशिभूषणाश्रिता ।
त्वमेववेधोविनुतासरस्वती त्वमेव लोकत्रयरूपिणीस्मृता ॥१२॥
तपस्विनस्त्वच्चरणाम्बुजद्वयीनखप्रभाभासितचेतसोऽम्बिके ।
गतश्रमाविन्ध्यमहीधरालये जयन्ति कामादिकदुर्ज्जयाहितान् ॥१३॥
त्वमेवमातः शरणागतानये निरन्तरम्पासिजनान्दयामयी ।
श्रुतंमयाविज्ञवराननादिदं विदन्ति सर्वेसनरासुरास्सुराः ॥१४॥
अतोऽहमाप्तश्शरणन्तवाम्बिके पदारविन्दद्वयमेतदुत्तमम् ।
समुज्झितोदीनतमस्तम स्समैर्विहायचित्तस्थितमानमन्नये ॥१५॥
विलक्षणामा वहुलक्षणाऽऽसदाविलक्षणा मा वहुलक्षणा सदा ।

त्वमिति स्पष्टमेवान्यत् ॥ १२ ॥ तपस्विनइति हेअम्बिके मातः हेविन्ध्यमहीधरालयेविन्ध्याचलवासिनि त्वच्चरणाम्बुजद्वय्याः नखानाम् प्रभाभिः भासितानि चेतांसियेषान्ते गतश्रमाः क्लान्तिरहिताः तपस्विनः कामादिकान् दुर्जयान् आहितान् जयन्ति ॥ १३ ॥

त्वमेवेति अयेहेमातः दयामयीकरुणाप्रधाना त्वमेव शरणागतान् जनान् निरन्तरम् सदैव पासिरक्षसि इदम्पूर्वोक्तम् मया विज्ञवराननात् विद्वद्वरमुखारविन्दात् श्रुतम् तथा सनराऽसुराः नरैर्मनुष्यैः असुरैर्दैत्यैश्च सहवर्त्तमानाः सुराइन्द्रादयोदेवाः सर्वे विदन्तिजानन्तिनाहंमिथ्यावदामीतिभावः ॥ १४ ॥

अये हे अम्बिके अहम् आनमन्सन् अत्यन्तंनम्रीभवन्सन् उत्तमंश्रेष्ठम् तवैतत् पदारविन्दद्वयम् शरणंसर्वोपद्रवेभ्योरक्षितृ शरणङ्गृहरक्षित्रोरित्यमरः आप्तः प्राप्तः किङ्कृत्वा चित्तस्थितम् तमोऽज्ञानान्धकारम् विहायपरित्यज्य कीदृशोऽहम् दीनतमोतिदीनः अथच समैस्सर्वैर्लोकैः उज्झितस्त्यक्तः समंसाध्वखिलंसदृगित्यमरः ॥ १५ ॥

विलक्षणेति भवती इतिशेषः मा माम् त्वामौद्वितीयायाइति मामित्यस्यमाऽऽदेशः आयात लाभात् अयाव शुभावहविधेर्वा तमधिकृत्यअनुकूलयित्वावा ल्यप्लोपेपञ्चमी सदासर्वदा अधिपाद्यादधिकंरक्षतु पारक्षणे प्रार्थने कर्त्तरिलिङ् कीदृशंमाम् सुकविम् शोभनकाव्यरचनाचातुरीपरिचितम् त्वत्कृपयैव सुकविंसन्तंमाम्भवती अधिपायादित्यभिप्रायः कृदृशीभवती विलक्षणोलोकोत्तरः आमोऽमनम् गतिर्ज्ञानंवा यस्यास्सा अमगत्यादिषु भावेघञ् यद्वा विलक्षणा लोकोत्तरा मा मातृस्वरूपा लक्ष्मीस्वरूपावा मश्शिवश्चन्द्रमावेधामालक्ष्मीश्चप्रकीर्त्तिता माचमातरिमानेचवन्धनेमःप्रकीर्त्तितइत्येकाक्षरः पुनः की. वहुलक्षणा वहूनिअनन्तानि शास्त्रज्ञैःपरिचितानि निगदितानिच सामुद्रिकोक्तानिवा लक्षणानि चिह्नानिनामानिवा यस्यास्सा लक्षणंनाम्निचिह्नेचेतिमेदिनी अथच विलक्षणाविगत-

समाऽधिपायात्सुकविन्ध्यवाऽऽसिनी समाधिपायात्सुकविन्ध्यवासिनी॥१६॥
मनोजजनुर्मानितमानहृन्मनोहराननने नूनमनूनदूनतम् ।
अनाथनानाघविनाशिनी जनन्यवाऽधनन्दीनमनेनसञ्जनम् ॥१७॥
देविदयामयिमेजननित्वम्पातकमाशुहराऽजननित्वम् ।

लक्षणा या सा बहुलक्षणयुक्तेतिविरोधःप्रतिभाति परिहारस्तु पूर्वोक्तार्थेन पु. की असदाविलक्षणा असतान्दुर्जनानाम् आविलानांमलिनानाम् पापिनामितियावत् क्षणानाशकर्त्री तनादिगणान्तरितात् क्षणुर्हिंसायामित्यतःपचाद्यच् टाप् पु. की. बहुलक्षणाबहूत्सवा क्षणउद्धवउत्सवइत्यमरः अथच या सदा मलिनोत्सवासा बहूत्सवसुनन्दितेतिविरोधः पूर्वोक्तार्थेनपरिहार्य्यः पु. की. समाधिपा समेषांसर्वेषाम् अधिपास्वामिनी यद्वा समाधिम् सम्प्रज्ञातासम्प्रज्ञातभेदेनद्विधभूतम् तन्नामकम्युक्तयुञ्जानयोगिकर्म्म पातिरक्षति तथाविधा पारक्षणे आतोऽनुपसर्गेकइतिकःप्रत्ययः पु. की. ध्यवा धियोबुद्धेः अवारक्षिका अवरक्षणे पचाद्यच् पु. की आसिनी आसमन्तात् असतिशोभतइतितच्छीला असगतिदीप्त्यादानेषु ताच्छील्येणिनिः यद्वा आसामस्त्येन अस्यतीतितच्छीला असुक्षेपणे णिनिः यद्वा आसामस्त्येन आस्तेइतितच्छीला आसउपवेशने णिनिः यद्वा असनमासनंवा आसः पूर्वोक्तधातुभ्योभावेघञ् सोऽस्तियस्यास्सा अतइनिठनावितीनिः ऋन्नेभ्योङीप् पु. की. समाऽविषमा लक्ष्मीसहितावा पु. की. सुकविन्ध्यवासिनी शोभनम् कंसुखमलंवायत्र यद्वा शोभनाः कामयूरायत्र स सुकः सचासौविन्ध्यश्च तस्मिन् वसतीतितच्छीला वसनिवासेणिनिः कोब्रह्मानिलसूर्याग्नियमात्मद्योतबर्हिषु कंसुखेवारिशीर्षेचकुश्शल्येनाभुविस्त्रियामितिविश्वलोचनम् ॥ १६ ॥

मनोजजनुरिति मनसस्सकाशात् जनुर्जन्मयस्यसमनोजजनुः कामः तस्यतेनवा मानितम् सत्कृतम् सम्पादितमितियावत् मानङ्गर्वम् हरतीतितथाविधम् मनोहरमतिसुन्दरम् आननंयस्यास्सा तत्सम्बोधनम् हेजननिमातः त्वमितिशेषःजनम् अवरक्ष नूनमितिनिश्चये कीदृशीत्वम् अनाथानाम् नाना बहुविधानि अघानिपापानिदुःखानिच तेषाम् विनाशिनी कीदृशञ्जनम् अनूनदूनतम् न ऊना दूनतासन्तापः यस्यसः तम् पु. की. अधनंनिस्स्वम् पु. की. दीनमगर्वम् पु. की. अनेनसंनिष्पापम् त्वद्दर्शनादितिभावः ॥१७॥

देवीति हेदेवि हेदयामयि प्रचुरकरुणे हेजननि हेमातः हेधनञ्जयभे हे अग्निप्रभे हेवरदे हेभक्ताभिलषितप्रदायिनि त्वम् मेमम पातकम्पापम् आशु हरविनाशय देविदयामयिमे इत्यत्र ममेत्यस्यस्थाने मेइत्यादेशस्य आमन्त्रितम्पूर्वमविद्यमानवदितिसूत्रेण निषेधेप्राप्तेसति नामन्त्रितेसमानाधिकरणेसामान्यवचनमितिसूत्रेणविधिःतथा मह्यमितिशेषः अजननित्वम् आक्रोशेनञ्यनिरितिनञ्पूर्वाज्जनिधातोः अनिः यद्वा जननम् अस्यास्तीतिजननी नजननी अजननी तस्यभावः अजननित्व-

देहिधनञ्जयभेजगदम्बा दुःखमयंवरदेऽजगदम्बा ॥१८॥
नदीनवारक्षणदासभाराऽनादीनवा रक्षणदा सभारा ।
नदीनवारक्षणदासभाराऽनादी नवा रक्षणदासभारा ॥१९॥
रविप्रभावाभवतीव्रतापारविप्रभावा भवती व्रतापा ।

मजन्मत्वम् जन्मरहितत्वम् मोक्षमितियावत् देहिवितर वाचार्थे पुनः दुःखमयम्प्रचुरकष्टम् प्राचुर्येऽर्थेमयद् गदंरोगम् अजक्षिप दूरीकुरु ममेत्यस्यानुवर्त्तनमत्र अजक्षपणे कर्त्तरिलोट् कीदृशीत्वम् जगतांलोकानाम् अम्बामाता यद्वा हेजगदम्बेतिभिन्नंसम्बोधनम् आदुःखमयमितिपृथक्पदम् दोधकवृत्तमिदम् लक्षणन्तु दोधकमिच्छतिभत्रितयाद्गाविितिवाग्वल्लभे ॥ १८ ॥

नदीनवेति नदीनाअदीना नअदीना नादीनाः सहसुपेतिसमासः तेषाम् वारस्समूहः तस्यक्षणमुत्सवम् दासतीति नादीनवारक्षणदासः दासृदानेकर्मण्यण् भारोभरणम् रक्षेतियावत् यस्यास्सा नादीनवारक्षणदासभारा तथा न आदीनवादोपायस्यास्सा अनादीनवा तथा रक्षणम्ददातीतिरक्षणदा डुदाञ्दाने आतोनुपसर्गेकः तथा आराति आदत्तेइत्यारा आङ्पूर्वात् रादाने आतश्चोपसर्गेइति कः ततष्टाप् सभायास्सदसः आरा इतिसभारा षष्ठीसमासः तथा नादोऽस्तियस्यतत् नादि गर्ज्जनकारीतियावत् इनंस्वामिनम् वातिगच्छतीतितत् इनवम् वागतिगन्धनयोः आतोऽनुपसर्गेकः स्वस्वामियुक्तमितियावत् एवम्भूतम् यत् आरम् अरिसमूहः अरिशब्दात् तस्यसमूहइत्यण् तस्यक्षणाः नाशकाः क्षणुहिंसायाम् पचाद्यच् दासभारस्सेवकसमूहायस्यास्सा तथा नआदिःकारणम् यस्यास्सा अनादिः अनादिरेवअनादीकृदिकारादक्तिनइतिङीष् यद्वाअनीदिश्चासौ ई लक्ष्मीरूपा इत्यनादी तथा नवा अपूर्वा या अनादिः सा अद्यापिनवेतिविरोधोऽव्यज्यते परिहारस्तुलोकोत्तरत्वात् तथा रोऽग्निः रश्चरामेऽनिलेवह्नौ भूमावपिधनेऽपिच इन्द्रियेधनरोधेचेत्येकाक्षरः क्षणदायांरजन्याम् असतिशोभतइति क्षणदासः असगतिदीप्त्यादानेषु पचाद्यच् क्षणदाम् आसयतिवा णिजन्तादसगतिदीप्त्यादानेषुइतिधातोः कर्मण्यण् इतिक्षणदासः चन्द्रः तयोः याभाः दीप्तयोलावण्यानिवा तासाम् अरा ऋच्छतिइति ऋगतिप्रापणयोः इतिप्रापणार्थे पचाद्यच् इतिरक्षणदासभारा अग्निचन्द्रतुल्येतियावत् इन्द्रवज्रावृत्तम् लक्षणन्तूक्तम् ।१९।

रवीति रवेस्सूर्यस्यप्रभावइवप्रभावोयस्यास्सा तथा भवस्यसंसारस्य भवेवा तीव्रतापान् महोग्रक्लेशान् ऋच्छन्तिप्राप्नुवन्तीतिभवतीव्रतापाराः ऋगतिप्रापणयोः कर्मण्यण् तेचते विप्राब्राह्मणाः तेषाम् भावः भावयतीति णिजन्ताद्भूधातोः पचाद्यच् यद्वा तेषाम् भायाःदीप्तेः अवारक्षणकर्त्री अवरक्षणे पचाद्यच् तथा व्रतस्य आपा आप्नोतीति आप्लृव्याप्तौ पचाद्यच् यद्वा आपातीत्यापा आङ्पूर्वकात् पारक्षणे अतः आतश्चोपसर्गेइतिकः तथा मानना सत्कारः तया सहिता तथा समम्

समाननारञ्जयतिस्वलोका न्समाननारञ्जयतिस्वलोकान् २०युग्मम्
सादासनीवश्यवनी सदासा जातायचारुस्वरुचायताजा ।
सारापदेहद्रुहदेपरासा त्वं सत्यमावध्यवमाऽत्यसत्वम् ॥२१॥
अगणनगुणगणभणनजनिताहितसुकृतानिचयचणनिपुणधिषणइह ।
नुतिततिमतिमतिमति सतिभगवति स लपतिजलपतिरपिकृतनतितव।२२॥

अविषमम् सशोभंवा आननंमुखंयस्यास्सा भवती भातेर्डवतुः उगितश्चेतिङीप् अरंशीघ्रम् रलयोस्सावर्ण्यात् अलमत्यर्थम् यद्वा आरम् अरिसमूहम् जयति तथा स्वलोकान् आत्मभुवनानि रञ्जयति कीदृशान्स्वलोकान् स्वे आत्मीयाः लोकाजनाः येषुते तान् लोकस्तुभुवनेजनइत्यमरः यद्वा सुतराम् अलोकान् लोकनंलोकः लोकृदर्शने भावेघञ् नलोकः येषु तान् अप्रकाशान् इतियावत् उपेन्द्रवज्रावृत्तम् लक्षणन्तूक्तमेव ॥ २० ॥

सादेति सारस्बलम्' आप्नुवन्तीतिसारापाः आप्लृव्याप्तौ कर्म्मण्यण् तेचते देहद्रुहाःशरीरद्रोहिणः राक्षसाइतियावत् तान् द्यतिखण्डयतीति दोअवखण्डने आतोनुपसर्गेकः इति कः तत्सम्बुद्धौ हेसारापदेहद्रुहदे सादस्यदुःखस्य षद्लृविशरणगत्यवसादनेषु भावेघञ् अस्यतीत्यसनी असुक्षेपणे बहुलत्वात् कर्त्तरिल्युट् टित्वात् ङीप् तथा वशिनाञ्जितेन्द्रियाणाम् अवतीति अवनी अवरक्षणे कर्त्तरिल्युट् ङीप् तथासदासा दासैस्सहिता तथा जातः आयोविस्ताराेलाभोवायस्यास्सा जाताया साचासौचारुरस्याच स्वरुक् निजकान्तिः तया आयतानिबद्धा आकृष्टावा विस्तृतावा तथा अजाऽजन्मा यद्वा जातायचारुस्वरुचा उपलक्षिता तथा आयताआकृष्टाः स्वायत्तीकृताइतियावत् अजाब्रह्मविष्णुशिवाः ययासा आयताजा तथा परेषांशत्रूणाम् अस्यतीत्यसा असुक्षेपणे पचाद्यच् टाप् यद्वा परा उत्कृष्टा तथा असतीत्यसा शोभमाना असगतिदीप्त्यादानेषु पचाद्यच् टाप् यद्वा साप्रसिद्धा त्वम् अत्यसत्त्वम् अतिशयेनाऽसत्त्वम् निर्बलम् मा माम् सत्यममृषा आवधि अवधेः आअभिव्याप्यमर्यादीकृत्य वा अवरक्ष इन्द्रवज्रावृत्तम्२१

अगणनेति हे अतिमतिमति अतिशयबुद्धिविशिष्टे हेसति हेभगवति इह अगणनागणनारहिताः असङ्ख्याइतियावत् ये गुणानामृत्वदीयशौर्य्यौदार्यादिधर्म्माणाम् गणास्समूहाःतेषाम् भणनेन जनितानामुत्पादितानाम् हितानाम् सुकृतानाम् पुण्यानाम् निचयेन बाहुल्येन चणा प्रसिद्धा निपुणादक्षा धिषणाबुद्धिर्यस्यसः सः प्रसिद्धः जलपतिर्वरुणः अपि अपिशब्दादिन्द्रादीनाङ्ग्रहणम् तव नुतिततिंस्तुतिपरम्पराम् कृता नतिःप्रणामः यस्मिन्कर्मणि तद्यथातथा लपतिवदति लप् व्यक्तायांवाचि कर्त्तरिलट् अचलधृतिर्वृत्तम् द्विगुणितवसुलघुभिरचलधृतिरिति इतितस्यालक्षणंवाग्वल्लभे ॥ २२ ॥

वरमितिवरदेदेहिमे परमसुधाकरवाणि ।
त्वच्चरणस्मरणंसदा स्वमुदेऽहङ्करवाणि ॥२३॥
तवपदचिन्तनपरवशाये पुरुषाननुसन्ति ।
संसृतिजनिदुःखानिते कतिनोनानुभवन्ति ॥२४॥
शंसतिमयिनुतिमयिदयानिधेविधेहिनमामि। त्वदनुग्रहतःकामदे
भीमयमम्बदयामि ॥ भीमयमम्बदयामितित्वमथवाशरणङ्कम् ।
स्वेनौजोनिवहेनकुर्वतीदेविविशङ्कम्। रङ्कस्स्वामिनियामिनीशवदने
ऽतिचकासति। शंसाति लभतेवित्तनाथभावंह्यनिशंसति ।२५ ॥
भोभगवतिजगदम्बिके दीनजनम्परिपाहि ।
मानसदाहि सदाऽहितम्पातकमाशुचदाहि ॥ २६ ॥

वरमिति हेवरदे हेपरमसुधाकरवाणि परमाउत्कृष्टा सुधायाः अमृतस्य आकरःखनिभूतावाणीवचोयस्यास्सातत्सम्बुद्धौ त्वमितिशेषः मेमह्यम् इतिवरम् देहि इतीतिकिम् अहम् स्वमुदेनिजहर्षाय त्वच्चरणस्मरणम् सदा करवाणि करवाणीत्यत्र क्रियाफलस्यकर्तृगामित्वे स्वरितञितइत्यादिना आत्मनेपदस्यप्राप्तौ सत्याम् विभाषोपपदेनप्रतीयमानेइत्यादिनाविकल्पात् परस्मैपदम कर्त्तरिलोट् उत्तमपुरुषैकवचनम् दोहावृत्तमिदम् लक्षणन्तु टोऽप्यपयोधरडोऽसमेपदेऽनादिगुरुढश्च तावेकंलघुसमपदेदोहांवक्त्यहिपश्चेतिवाग्वल्लभे ॥ २३ ॥

तवेति स्पष्टएवास्यार्थः दोहावृत्तमिदम् ॥ २४ ॥ शंसतीति अयिहे दयानिधे तथा हेकामदे वरप्रदे तथा हेअम्बमातः तथा हेस्वामिनि तथा हेयामिनीशवदने चन्द्रमुखि तथा हेअतिचकासति अतिशयेनशोभमाने तथा हेसतिसमीचीने विदुषिवा स्वेननिजेन ओजोनिवहेन बलबाहुल्येन तेजोनिकरेणवा भीमयमम्भयङ्करकालम् अपि भीमयम्प्रचुरभयम् अतएव विशङ्कंविशिष्टशङ्कायुतम् यद्वा विगतशङ्कम् यथास्यात्तथा कुर्वती त्वम् नुतिंस्तोत्रम् शंसति वदतिसतिविद्यमानेमयि दयाम् विधेहिकुरु अथवा अहमितिशेषः कञ्चनमितियावत् शरणम् यामि इतिवदकथय अहम् त्वामितिशेषः नमामि कुतः हियतः रङ्कोदरिद्रः त्वदनुग्रहतः तवानुकम्पातः वित्तनाथभावङ्कुबेरत्वम् तद्रूपम् शङ्कल्याणम् अनिशंनिरन्तरम् लभतेप्राप्नोति कुण्डलिकावृत्तमिदम् लक्षणन्तु पूर्वन्दोहानामकंवृत्तंस्यादथयत्र रोलाचरणचतुष्टयम्भवेदनन्तरमत्र भवेदनन्तरमत्रपदश्चसमाहितयमकम् वसुपदनियमितमूर्त्तिकिलकुण्डलिकानामकम् वसुपदनियमितमूर्त्तिभवतिफणिपतिमतिंपूर्वम् पूर्वरसिकमनोज्ञतयैतद्वृत्तमपूर्वमितिवाग्वल्लभे ॥२५॥

भोइति मानसन्दहतीतितच्छीलम् सदासर्वदा अहितमननुकूलम् दाहीत्यत्र दाप्लदने कर्त्तरिलोट् स्पष्टमन्यत् दोहावृत्तमिदम् ॥ २६ ॥

भगवति शरणगतंमामनिशम्पाहि ।
मनसिस्थितामदीये नितराम्भाहि ॥ २७ ॥
राक्षसासुहरासारारासाऽऽराध्यापराऽजरा ।
राजराजत्वरामाररमारामाऽवसाक्षरा ॥ २८ ॥
सायाप्रज्ञाऽनवद्याजननिकदनमिन्द्रारिदस्वादरासा
सारादस्वादरिद्रादुरितविमलिनस्याकनद्धोरुदासा ।
सादारुद्धोनकस्याऽमलगुणनिवहाक्षाराभिद्याविवासा
सावाविद्याभिरक्षा हरममविबुधाद्यावनज्ञाप्रयासा ॥२९॥

भगवतीति भाहिशोभस्व भादीप्तौ कर्त्तरिलोट् स्पष्टमितरत् वरवावृत्तमेतत् लक्षणन्तु रविनगर्यातरतिधृतिपरिमितमात्राच पटद्वचरमदलवरवेत्याहिपउवाचेतिवाग्वल्लभे ॥ २७ ॥

राक्षसेति राक्षसानाम् असुहराःप्राणहरिणः आसाराबाणधारासम्पाताः सुहृद्बलानिवायस्याःसा राक्षसासुहरासारा यद्वा राक्षसासुहरेतिभिन्नंविशेषणम् आसारेतिभिन्नम्पदम् आसमन्तात् सारोबलम् उत्कर्षोवायस्यास्सा तथा आरासा आसमन्तात् रासःक्रीडाविशेषः शब्दोवा यस्यास्सा रसशब्दे भावेघञ् रासृशब्देइत्यस्माद्वा भावेघञ् तथा आराध्याऽऽराधनीया तथा परोत्कृष्टा पालनकर्त्रीवा पृपालनपूरणयोः पचाद्यच् तथा अजरायुवतिः अपरिणामावा तथा राजराजत्वकुबेरत्वम् नृपाधिपतित्वंवा रातिददातीति राजराजत्वरा तथा मारस्यकामस्य रमायालक्ष्म्याः शोभायाइतियावत् अरा ऋच्छतीति ऋगतिप्रापणयोः पचाद्यच् टाप् यद्वा आरातीतिआरा आङ्पूर्वात् रादानेइत्यतः आतश्चोपसर्गेइतिकः टाप् पक्षद्वयेऽपिस्वीकारिणीत्यर्थः तथा अक्षरा नाशरहिता यद्वा अक्षरम्ब्रह्म अस्तियस्यास्सा अर्शआदित्वादच्प्रत्ययः टाप् सा प्रसिद्धा यद्वा साक्षराइत्येकम्पदम् अक्षरेणपरब्रह्मणा अक्षरैर्वर्णैर्वा सहिता त्वमितिशेषः मा माम् अव ॥ २८ ॥

सायेति हेजननि सात्वमितिशेषः मम कदनम् नाशम् हरनिवारय कीदृशीत्वम् साया अयेन शुभावहदैवेन यद्वा आयेन लाभेनविस्तारेणवा अय ज्ञानेन गमनेनच अयगतौ इण्गतौवा भावेघञ् सहिता पु. ली. प्रकर्षेणजानाति सर्वमिति प्रज्ञा प्रपूर्वात् ज्ञाऽवबोधनेइत्यतः आतश्चोपसर्गेकइतिकः टाप् यद्वा प्रकृष्टा ज्ञाबुद्धिर्यस्यास्सा पु. ली. अनवद्या निर्दोषा पु. की. इन्द्रारिदस्वा इन्द्रस्यारीन् दैत्यान् द्यतिदातिवा दोअवखण्डने दाप्लवनेवा अतआतोऽनुपसर्गेकः इति कः टाप् तथाविधस्स्वआत्मायस्यास्सा पु. की. दरासा दरस्यभयस्य असा आसावा विनाशिनीतियावत् असुक्षेपणे पचाद्यच् टाप् पक्षान्तरे आङ्पूर्वात् षोऽन्तकर्मणि आतश्चोपसर्गेइतिकः टाप् यद्वा आदरासा इतिच्छेदः आदरस्य असा असगतिदीप्त्यादानेषु पचाद्यच् टाप यद्वा अदरेतिपृथक् असेति पृथक् पदम् अदरा निर्भया तथा असा शोभमाना पूर्ववदच् पु. की. सारादस्वा

हीनदीनजनपालनकारिणि दुरितजनितदरवारनिवारिणि ।
तवपदपद्मयुगङ्गुणविते वसतु सदासुखदंममचित्ते ॥ ३० ॥

सारस्यबलस्यस्थिरांशस्यवाआददतेइतिसारादाः आङ्पूर्वकात् डुदाञ्दाने आतोऽनुपसर्गेकः इतिकः यद्वा आरदनमारादोभेदनम् आङ्पूर्वकात् रदविलेखने भावेघञ् तेन सहिताः स्वे आत्मीयाः गणाइतियावत् स्वाः ज्ञातयोदेवा धनानिचयस्याः ययावा सा पु. की. अदरिद्रा सर्वकामपरिपूर्णा दारिद्र्यनाशिनीच यद्वा सारादस्वादरिद्रेत्येकम्पदम् सारादैः स्वैः अदरिद्रा इति पु. की. आकनन्द्वोरुदासा आसमन्तात् केनसुखेनप्रकाशेनच नद्धावद्धाः उरवोमहान्तः दासाभक्ता-यस्याः सा यद्वा आकनद्धाइतिपृथग्विशेषणम् उरुदासाइति पृथक् यद्वा अकनद्धाः अश्चकश्च अकौ विष्णुवेधसौ ताभ्याम् नद्धायुक्तेतियावत् अकारोवासुदेवस्स्यादिति कःप्रजापतिरुद्दिष्टइतिचकंसुखङ्कंसुखंस्मृतमिति कश्चात्मनिमयूरेचकःप्रकाशउदाहृतइति सर्वत्रैकाक्षरः पु. की. अमलगुणनिवहामहोज्ज्वलगुणगणा पु. की. अक्षारभिद् अक्षंविभीतकम् अक्षान्पाशान्वा ऋच्छतीत्यक्षारः कलिः ऋगतिप्रापणयोः कर्मण्यण् तम् भिनत्तीत्यक्षारभिद् यद्वा क्षारभित् क्षारंनाशम् भिनत्तीति पु. की. विवासा विशेषेण वासस्स्थितिर्यस्यास्सा पु. की. अभिरक्षा अभितस्सर्वतः रक्षतीति अभिपूर्वात् रक्षपालनेइत्यतः पचाद्यच् टाप् पु. की. विबुध.द्यावनक्षा विबुधाद्यानान्देवप्रभृतीनाम् अथच विबुधानान्देवानाम् आद्याःकारणीभूताः ब्रह्मविष्णुशिवाः तेषाम् अवनंरक्षणम् जगन्मातृत्वात् जानातीतिसा पु. की. अप्रयासाप्रयासरहिता साका या विद्यावाविद्येव अस्तीतिशेषः इवार्थेवाशब्दः विद्यापक्षे साया विस्तारसहिता तथा प्रज्ञा प्रकृष्टाज्ञाविद्वांसोययासा तथाअनवद्यानिर्दोषा तथा इन्द्रारिदस्रा पूर्ववत् विद्ययैव सर्वेदैत्यानिर्ज्जिताइतिभावः तथा दरासाभयनाशिनी तथा सारादस्वासारादाःस्वे आत्मीयाः विषयाः पदार्थाइतियावत् यस्यास्सा तथा अदरिद्रा पूर्ववत् तथा आकनद्धोरुदासा पूर्ववदेव विद्यायादासास्सुखिनः प्रकाशवन्तोभवन्त्येव तथा अमलगुणनिवहा पूर्ववत् तथा अक्षारभित् कलिनाशिनी तथा विवासा पूर्ववत् तथा अभिक्षरा तथा बिबुधाद्यावनक्षा विशेषेण बुधाद्यानाम्पण्डितप्रभृतीनाम् अवनक्षा तथा आप्रयासा आसामस्त्येन प्रयासोयस्यांसा कीदृशस्यमम दुरितविमलिनस्यपापाविलस्य पु. की. सादारुद्धोनकस्य सदनंसादः षद्लृविशरणगत्यवसादनेषु भावेघञ् सादेनदुःखेन आरुद्धस्सादारुद्धः कुत्सितः ऊनः ऊनकःऊनशब्दात् कुत्सितार्थेकन् सादारुद्धश्चासावूनकश्च सादारुद्धोनकः तस्य यद्वा सादेनारुद्धः ऊनः कः आत्मायस्यसः तस्य स्रग्धरावृत्तमिदम् लक्षणमुक्तम् महालमलबन्धोऽयम् ॥ २९ ॥

हीनेति दरवाराभयसमूहाः अन्यत्स्पष्टम् पादाकुलकंवृत्तम् अनियतगुरुलघुरहितविश्राबंषोडशकलायदाप्रतिपादम् फणिपतिपिङ्गलभणितविभेदम्पादाकुलकमृत्तमत्रेदम् इतितल्लक्षणंवाग्वल्लभे उक्तम् ॥ ३० ॥

सत्यंश्रीमति भोस्सतीन्दुवदने वंशोद्भवःप्रव्रती तप्तोदेविलसच्चलांशुवसने धन्येपरे सारधे । शुद्धेवीरपविक्रमे सुवचनेऽज्ञस्साध्वसादस्सदा दासोहंसकलेतवाऽतिशुभकृत्तीक्ष्णायुधेऽस्म्यापदा।३१। ननुतेऽतनुतानातिनूत्ननीतेऽनितोनते। नानानतनुतेऽनन्तेतनोतूतिन्ततांतनुः ॥३२॥ केकाकूकेकिकाकाककुकोकाकङ्कीः ककाः। कोकौकौकोककाकाङ्ककोककङ्काककङ्ककम् ३३॥

सत्यमिति भोः हेश्रीमति तथा हेसति तथा हे इन्दुवदनेचन्द्रमुखि तथा हेदेवि तथाहं लसच्चलांशुवसने लसन्तोदेदीप्यमानाः चलास्सर्वतःप्रसरन्तः अंशवःकिरणाः यस्य एवम्भूतंवसनंवस्त्रंयस्यास्सा तत्सम्बुद्धौ तथा हेधन्येपुण्यास्पदीभूते धन्यम्पुण्यचतिप्रिप्वितिमेदिनी तथा हेपरेसर्वोत्कृष्टे तथा हेसारधे सारम् दधातीति सारधा तत्सम्बुद्धौ डुधाञ्धारणपोषणयोः अतअतोनुपसर्गेकः इतिकः टाप् तथा हेशुद्धेमायातीतस्वरूपे तथा हेवीरपविक्रमे वीरान्भक्तान् शूरान् पातीति वीरपः तथाभूतोविक्रमःपराक्रमः यस्यास्सा तत्सम्बुद्धौ यद्वा वीरःपविवद्वज्रवत् क्रमः शत्रूणामाक्रमणम् यस्याःसा तत्सम्बुद्धौ तथा हेसुवचने शोभनसम्भाषणे तथा हेसकले सर्वाभिःकलाभिः सहिते सम्पूर्णेवा तथा नेअतिशुभकृत् बहुलकल्याणकारिणि तथा हेतीक्ष्णायुधे निशितसकलशस्त्रे यद्वा अतिशुभकृत्तीक्ष्णायुधे इत्येकंसम्बोधनम् अहम् सदा तव दासः सत्यमस्मि कीदृशोऽहम् वंशोद्भवस्सत्कुलोत्पन्नः पुनःकीदृशः प्रव्रतीप्रकर्षेणव्रतवान् पु. की. अज्ञः सर्वस्मिन्विषयेमूढः पु. की. साध्वसादः भययुक्तः पु. की. आपदानानाविधयालौकिक्याविपत्त्या तप्तः शार्दूलविक्रीडितच्छन्दः ॥ ३१ ॥

नन्विति हेअतिनूत्ननीते अतिशयेन नूत्नानवीना नीतिर्न्यायः यथायोग्यकारित्वमितियावत् यस्यास्सा तत्सम्बुद्धौ तथा हेअनितोनते न इताऊनतायया तत्सम्बुद्धौ तथा हेनानानतनुते नाना अनेके नतानम्रायें जनाइतियावत् तैर्नुतातत्सम्बुद्धौ तथा हेअनन्तेसर्वदैकरसस्वरूपे तेतव तनुश्शरीरम् ततांविस्तृताम् ऊतिम् रक्षाम् तनोतु ननुनिश्चये कीदृशीतनुः अतनुताना नतनुःस्वल्पः तानोविस्तारोयस्यास्सा यद्वा हे अतनुतानातिनूत्ननीते इत्येकंसम्बोधनम् नतनुस्तानोयस्याः साअतिनूत्ना नीतिर्यस्यास्सातत्सम्बुद्धौ ॥ ३२ ॥ द्व्यक्षरोऽयंश्लोकः।

ककेति हे उपापूतते उपसमीपे आसामस्त्येन पुनातीति उपापूः उपआङ्पूर्वात् पूञ्पवनेइत्यतः मर्त्तरिक्विप् उपापूः तता ऊतिर्यस्यासा तत्सम्बुद्धौ त्वमितिशेषः माम् अमप्राप्नुहि अमगत्यादिषु इत्यतःकर्त्तरिलोट् कीदृशीत्वम् केकाकूकेकिकाकाककुकोकाकङ्कीः केकांस्ववाणीम् कुवतेइतिकेकाकूः कुङ्शब्दे इत्यतःकर्त्तरिक्विप् सचासौ केकीमयूरः तस्य कः आत्मेवकआत्मायेषान्ते केकाकूकेकिकाः मयूरवत्क्रूरान्तःकरणाः अप्रियोच्चैर्भाषिणइतियावत् तेचते अकाः

लोलालीलाललल्लीला ऽमामीमममामममम् । पापापापापपोपापू ततोतेऽतीततातातम् ॥३३॥ मातर्दासोभवत्यास्सन्नहन्दुःखीतिभीतिभृत् ॥ नीतिविद्वीतिहोत्राभे प्रीतिभागद्भुतंमहत् ॥ ३४॥ नानाज्ञानादिदानामल-वहलयशस्स्तोमतुच्छीकृतेन्दुम् । सन्दोहन्दोरुचन्दोषितपतितजनाऽऽतापहा-रिप्रतापाम् ॥ भानाम्भानांसभानान्दशनसुपुमयातारहाराञ्जयन्तीं । वन्देऽहन्देविमन्देतरतरतरणिव्रातजित्तेजसन्त्वाम् ॥३५॥ इतिचि त्रपदैस्स्तुत्वा सदेवींविन्ध्यवासिनीम् । विपुलोत्कलिकाक्रान्तपूस्सन्नहृदयोऽनमत् ॥३६॥

अप्रकाशाइतिकेकाकूकेकिकाकाः तचते अकाः आकावा कुटिलगतयः अककुटि-लायाङ्गतौ इत्यतःपचाद्यच् पक्षेभावेघञ्ततःअर्शआदित्वादच् इतिकेकाकूकेकि-काकाकाः कोःपृथिव्याः कोकमादानम् कुकआदाने भावे घञ् कङ्कन्ते आप्नुवन्ति इतिकुकोकाकङ्काः ककिगतौ कर्म्मण्यण् राजानइतियावत् केकाकूकेकिकाकाका-श्चतेकुकोकाकङ्काः इति केकाकूकेकिकाकाककुकोकाकङ्काः तान् किरतिकृणा-तिवा कृविक्षेपे कृञ्हिंसायांवा कर्त्तरिक्किप् इति केकाकूकेकिकाकाककुकोकाक-ङ्ककीः दुष्टदैत्यादिभूपहन्त्रीतिभावः पु. की. ककतेइतिकका ककलौल्येइत्यतः-पचाद्यच् लौल्यङ्चवेश्चापल्यंचतितदर्थः पु. की. लीलालीला लोलाश्चताः आल्यः-स्सख्यः ताः लात्यादत्ते इति लाआदाने आतोनुपसर्गेकःइतिकः टाप् पु. की. ललल्लीला ललन्तीविलसन्ती लीला यस्यास्सा पु. की. पापापापापपा पापम् आप्नुवन्तीतिपापापाः आप्लृव्याप्तौ कर्म्मण्यण् नपापंयेषान्ते अपापाः पापापाश्च अपापाश्च ते पापापापापाः तान् उभयानपि पाति रक्षतीति पापापापापपा पार-क्षणे आतोनुपसर्गेकःइतिकः टाप् कीदृशंमाम् कोकौकौकोककाकाङ्कोककम् कोकश्चक्रवाकः सचासौ ओकःपक्षी ओकदशकुन्तवृषलाविति इति कोकौकः सएव ओकस्स्थानंयस्यतत् कोकौकौकः एवम्भूतंयत् अकम्दुःखम् तेनतस्साद्धा यः काकः लौल्यंश्चापल्यमितियावत् कक लौल्ये भावेघञ् सएव अङ्कःकलङ्कः तम् कोकते आदत्ते कुकआदाने कर्मण्यण् इति कोकौकौकोककाकाङ्ककोकः कुत्सितश्चासौकोकौकौकोककाकाङ्ककोकःइतिकोकौकौकोककाकाङ्ककोककः कु-त्सितार्थेकन् तम् कोकवञ्चत्पदविरहिणमितिभावः पु. कीदृशं माम् काककङ्क-कम् काकाश्चकङ्काश्चतेकाककङ्काः तेषाम् कंसुखमिवकंसुखंयस्यसतम् पु. की. अमीमम् मीमनंमींमः गतिः द्रमहम्ममीमृगताविर्तिमीमृधातोः भावेघञ् नमीमः यस्यसतम् अगतिम् इतियावत् पु. की. अमाममम् अमायाः मश्चन्द्रः तस्य-माइवमायस्यसः तम् अप्रभमितिभावः मश्शिवश्चन्द्रमावेधाइत्येकाक्षरः पु. की. अतीततातातम् तातस्यभावस्ताता अतीतातातताय्स्ययस्साद्धा सतम् ॥ ३४ ॥ अतीततातातम् तातस्यभावस्ताता अतीताताततायस्ययस्साद्धा सतम् ॥ ३४ ॥

हेनीतिविद्वीतिहोत्राभे हेवह्निदीप्ते हेनीतिवित् हेनी-युग्ममिति मातरिति हेमातः हेजननि हेवीतिहोत्राभे हेवह्निदीप्ते हेनीतिवित् हेनी-तिज्ञे प्रीतिभाक् भक्तिमान् अहम् भवत्यास्तव दासस्सन् दुःखी तथा भीतिभृत्स-भयः असीतिमहदद्भुतमाश्चर्यम् अस्तीतिशेषः ॥ ३५ ॥

मङ्गलसङ्गलसल्ललितश्री स्तत्रवसन्नथनिर्जितचित्तः ।
मोदयितुंविधिवद्विदधेतांसप्तशतीनुतिपाठशतंसः ॥३७॥
श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्श्रीदेविप्रसादकविनाविहितेनिबन्धे ।
सर्गस्समाप्तिमिहसप्तमएषलक्ष्मीनारायणीयचरितेपरिचित्रितेऽगात् ३८

इति श्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जनशर्म्मात्मजकविवर-दविप्रसादनिर्म्मिते कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणजी-वनचरितात्मके मङ्गलाङ्के लक्ष्मीनारायणकाव्ये सप्तमस्सर्गः॥७॥

नानेति हेदेवि अहन्त्वाम् वन्दे कीदृशीन्त्वाम् नानाज्ञानादीनाम् वस्तूना-मितियावत् दानेनयद्वा वस्तुविधानाम् ज्ञानांविदुषाम् अज्ञानांमूर्खाणांवा आनादि-दानेन प्राणप्रभृतिविश्राणनेन अमलानांस्वच्छानाम् बहलानामनन्तानाम् यश-साम् स्तोमस्समूहः तेन तुच्छीकृतः मन्दप्रभीकृतः इन्दुश्चन्द्रमाः यया सा ताम् पु. की. दोषितास्सञ्जातदोषाः पतिता येजनाः तेषाम् आसमन्तात् तापम् हर-तीतितच्छीलः प्रतापोयस्यास्साताम् पु. की. तारोऽत्युत्तमः हारोमौक्तिकमाला यस्यास्साताम् पु. की. दशनसुषुमया दन्तोत्तमशोभया भानान्ताराणाम् सम्ब-न्धिनीनाम् सभानाम् समूहानाम् भानान्दीप्तीनाम् सम्बन्धिनम् सन्दोहंसमूहम् जयन्तीम्वशीकुर्वतीम् पु. की. मन्देतरतरमत्यन्तममन्दम् तरणिव्रातजित् मार्त्त-ण्डव्यूहजयि तेजोयस्यास्साताम् नक्षत्रमृक्षम्भन्ताराताराकाऽप्युडुवास्त्रियामिति स्युःप्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयइतिचामरः स्रग्धरावृत्तम् ॥ ३६॥ इतीति विपुलोत्कलिकाक्रान्तहृद्व्योमहोत्कण्ठासम्भृतमानसः सः कवीन्द्रोल-क्ष्मीनारायणः श्रीविन्ध्यवासिनीन्देवीम् इति पूर्वोक्तरीत्याचित्राण्यद्भुतानि पदा-निसुप्तिङन्तानि यस्मिन्कर्मणि तद्यथास्यात्तथा स्तुत्वा अनमत् प्रणामम् कृतवान् ॥३७॥ मङ्गलेति मङ्गलस्यसङ्गेन लसन्ती यद्वा मङ्गलस्य सङ्गम् लाति आदत्ते इति मङ्गलसङ्गलाअतएव सतीसमीचीना ललितामनोरमा श्रीश्शोभा यस्य सः नि-र्ज्जितचित्तोवशीकृतमनाः सः कविवरोलक्ष्मीनारायणः तत्र विन्ध्याचलेवसन्सन् ताम् भगवतीम् मोदयितुम् प्रसन्नाङ्कर्त्तुम् सप्तशतीनुतिपाठशतम् मार्कण्डेयपु-राणान्तर्गतभाव्यष्टमसावर्णिनामकमनुकथाप्रस्तावोद्भवत्रयोदशाध्यायात्मकभग-वतीचरितस्तोत्रस्यशतसङ्ख्याकान्पाठान् विदधेकृतवान् तत्परिमितैर्दिवसैरि-तिशेषः दोधकनामकंवृत्तमेतत् लक्षणन्तूक्तमेव ॥ ३८ ॥ श्रीति इह निबन्धे एषः सप्तमस्सर्गः समाप्तिमगात् कीदृशेनिबन्धे परिचित्रिते एकाक्षरादिचित्रयुक्ते पु. की. लक्ष्मीनारायणीयम् चरितम् यत्र एवम्भूते वसन्ततिलकावृत्तम् ॥३९॥

इति श्री स्वकृतस्य कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणजीवन-चरितात्मकस्य मङ्गलाङ्कस्य लक्ष्मीनारायणकाव्यस्य सुमङ्ग-लाख्यायाम् व्याख्यायाम् सप्तमस्सर्गस्समाप्तः ॥७॥

---

# अष्टमः सर्गः ।

ततोविद्वद्वरव्रातस्तुताद्भुतमतिःकृती। व्रतंसमाप्यनिर्विघ्नंप्रायाद्वाराणसीमयम् ॥ १॥ अतःपरम्परित्यज्यपुरींवाराणसीमिमाम् । मनसाऽपिवहिर्गन्तुंनोत्सहिष्येकदाप्यहम् ॥ २ ॥ सत्यवाङ्निर्जितस्वान्तश्शान्तस्सन्ततधीरयम् । लसत्कवित्वशालीतिप्रतिज्ञामकरोत्तदा ॥ ३ ॥ युग्ममिति

अथविक्टोरियाख्यायामहाराज्ञ्याः प्रियंवदे । श्रीकाशीमागतेसूनौमध्यमेड्यूकनामके ॥ ४ ॥ विदुषाकेनचित्प्रीत्याप्रेरितोऽयङ्कवीश्वरः ।

तत इति ततोऽनन्तरम् ततस्तस्माद्विन्ध्याचलाद्वा अयम् लक्ष्मीनारायणस्सुकविः व्रतम् सप्तशतीशतपाठरूपमित्यर्थः निर्विघ्नंसमाप्य वाराणसीङ्काशीम् प्रायात् प्रापत् कीदृशः विद्वद्वरव्रातैः स्तुता अद्भुता मतिर्बुद्धिर्यस्यसः पु. की कृतीप्रशस्तपण्डितः ॥ १ ॥ अत इति तदा अयम् लक्ष्मीनारायणस्सुकविः इति प्रतिज्ञाम् दृढामनसा नतुवाचा अकरोत् इतीतिकिम् अहम् अतोऽस्मात्कालात्परम् कदापि कथमपिच इमाम् कैवल्यमुक्तिप्रदाम् वाराणसींश्रीकाशीम् पुरीम् परित्यज्य मनसाऽपिवहिर्गन्तुम् न उत्सहिष्ये विशेषणानिस्पष्टानि ॥ २ ॥ ३ ॥ युग्मम् अथेति अथानन्तरम् विक्टोरियेत्याख्यानामयस्यास्तस्याः महाराज्ञ्याः सूनौपुत्रे श्रीकाशीम् आगतेसति केनचित् विदुषा प्रेरितः अयम् लक्ष्मीनारायणः स्सुकविः तस्य महाराज्ञीसूनोः प्रशस्तिश्लोकसप्तकम् प्रशंसार्थकानाम् श्लोकानाम् सप्तकम् सप्तसङ्ख्याकस्वरूपम् प्रीत्यामुदा निरमात् इतरत्स्पष्टम् तच्छ्लोकसप्तकन्तु अवनिपतिकिरीटकोटिचञ्चत्प्रपदनृपव्रजदेवताङ्गजन्मन् । सकुशलमिहतावकः प्रवेशस्समजनियत्तदहोमहर्द्धयेनः ॥ १ ॥ प्रौढप्रतापहतवैरिमहान्धकारोरस्योदयोभुवनशालिविशालकीर्त्तिः । लोकाम्बुजन्मवरहर्षविधानकर्मावालोऽशुमानिवभवानिहभातिवीर ॥ २॥ पुरामूर्त्तिर्यस्यान्नृपनुतपदायाश्शुभतरांद्दिदृक्षारंस्मारंवयमतुलतोषैकनिलयाः । भवन्तंश्रीमन्तंसुतमहहतस्याविधिवशाद्ददानीमालोक्यस्थिरतरमुदस्समसुनियतेः॥ ३ ॥ श्रीश्रेणीश्रितयत्प्रभूतमभितोदुर्भिक्षमासीदहोयुष्मत्त्रासभरादरातिरिवतन्मग्नम्पयोधाविव । आकर्ण्यागमनंशुभैकसदनंलोकोऽप्यसौतावकंशर्म्माऽऽगाद्यदिदन्तदद्यकुशलःकोवर्णयेद्भूतले ॥ ४ ॥ ईहामहेवयमिहानिशमेवभव्यायात्राभवेत्तवभृशंविगतान्तराया । तस्यांसमस्तमनुजेश्वरसेवितायाम्भक्तिश्चनोऽत्रभवतैवनिवेदनीया ॥ ५॥ त्रिभुवनपतिरेकश्शासितायांजगत्यांशरणगजनरक्षाकर्मदक्षःकृपाब्धिः । विलस

निरमाद्रुचिरन्तस्यप्रशस्तिश्लोकसप्तकम् ॥ ५ ॥ युग्मम् ॥ तद्गृहीत्वाकवे-
रस्मात्सुबुद्धेः स्वबुधःकुधीः । कस्मैचिन्निजमित्रायधूर्त्तायविदुषेऽदिशत्॥६॥
असौमत्कृतिरित्यस्योपरिष्टात्परिलिख्यसः । श्रीमतेश्रीमहाराज्ञी-
सुतायेदंसमार्पयत् ॥७॥ तत्सप्तकंसमम्पद्यैरन्यविद्वद्विनिर्म्मितैः । मुद्रयि-
त्वामहाराज्ञीसुताज्ञातःस्ततःपरम् ॥८॥ हरिश्चन्द्रेणसर्वत्रप्रेपितंविज्ञसन्निधौ।
अद्राक्षीद्रघुराजाख्योरीवाँपुरनरेश्वरः ॥ ९ ॥ युग्मम् ॥ विनिर्म्मितानिपद्या-
नियैरिमानिकवीश्वरैः । तेभ्योमुद्राशतन्देयम्प्रत्येकंसादरन्त्वया ॥ १० ॥
इत्यालिख्यसरीवेशः काशीस्थायप्रमोदवान् । रघुनाथप्रसादायाऽदात्पत्रं-
वित्तसंयुतम् ॥ ११ ॥ क्षत्रियप्रवरोधीमान्स्वास्तिसन्दोहनान्दितः ।
श्रीसङ्कटाप्रसादाख्यः सुहृत्सज्जनताधनः ॥ १२ ॥ रघुनाथप्रसादन्त-
ङ्कोष्ठपालंधृहन्मतिम् । अब्रवीद्धर्मसंयुक्तांमृद्वीमितिगिरन्ततः ॥ १३ ॥

तुसततंनस्तत्रसुप्रार्थनैषविहतरिपुतदीयंस्ताच्चिरस्थायिराज्यम् ॥ ६ ॥ सानन्दा-
ननुभूयविघ्नरहितान्वीरेन्द्रयात्रोत्सवानाऽऽरोग्येणसमाश्रितोत्तमतनुर्दीर्घायुरु-
ज्जृम्भितः। कल्याणैकनिकेतनेननिलयंस्वम्भूषयन्वर्ष्मणाश्रीराज्ञीहृदयप्रमोदजल-
धेराकासुधांशुर्भव ॥७॥ इति ॥४॥५॥ युग्मम् तदिति सपूर्वोक्तःप्रेरकोबुधः अस्मात्
सुकवेर्लक्ष्मीनारायणात् तत्प्रशस्तिश्लोकसप्तकम् गृहीत्वा कस्मैचित् धूर्त्ताय विदुषे
पण्डिताय अदिशददात् कीदृशः सः कुधीः आपन्नविश्वासवञ्चनपरत्वात्
कुत्सितबुद्धिः ॥ ६ ॥ असावितिति सः धूर्त्तोऽविद्वान् असौप्रशस्तिः श्लोकसप्तक-
रूपा मत्कृतिरस्तीति अस्यकविवरलक्ष्मीनारायणनिर्म्मितस्यप्रशस्तिश्लोकसप्त
कस्य उपरिष्टात् परिलिख्य श्रीमहाराज्ञीसुताय इदम्प्रशस्तिश्लोकसप्तकम् समा-
र्प्पयदर्पितवान् ॥ ७ ॥ तदिति ततःपरन्तदनन्तरम् रघुराजाख्योरीवापुरनरेश्वरः
तत् श्रीमत्कविवरलक्ष्मीनारायणनिर्म्मितंसप्तकम् अद्राक्षीद्दृष्टवान् कीदृशंसप्तकम्
हरिश्चन्द्रेणहरिश्चन्द्रनाम्ना श्रीकाशीवास्तव्येनमहाधनिकेनसकलविद्यालयेनवैश्य-
वर्य्येण महोत्साहात् महाराज्ञीसुतस्यआज्ञातः अन्यविद्वद्भिर्निर्मितैः पद्यैः समंसह
मुद्रयित्वा सर्वत्रसर्वेषुदेशेषु विज्ञसन्निधौ विज्ञपदमत्र राजाद्युपलक्षणम् प्रेषितम्
८।९। विनिर्म्मितानीति सः रीवेशोरघुराजसिंहः इत्यालिख्य वित्तसंयुतम पत्रम्
रघुनाथप्रसादाय अदात्प्रेषितवान् इतीतिकिम् यैः कवीश्वरैः इमानिपद्यानिवि-
र्म्मितानि तेभ्यः प्रत्येकम् मुद्राशतम् त्वयाभवता सादरंससत्कारम् देयम्
स्पष्टमन्यत् ॥ १० ॥ ११ ॥ युग्मम् क्षत्रियेति ततः श्रीसङ्कटाप्रसादाख्यस्सुहृत्
रघुनाथप्रसादम् कोष्ठपालंराजकीयश्रीकाशीरक्षाधिकृतंकुतवालपदवाच्यम् को-
ष्ठपोदण्डवासिकः कोष्ठपालइतिपञ्चतत्त्वप्रकाशः इतिवक्ष्यमाणाङ्गिरम् अब्रवीत्
इतरत्स्पष्टम् युग्मम् ॥ १२ ॥ १३ ॥ प्रशस्तीतिस्पष्टम् ॥ १४ ॥ मयेति हेमित्र

युग्मम् । प्रशस्तिसप्तकंचश्वत्पदार्थपरिपूरितम् । लक्ष्मीनारायणेनेदं निरमायिसुखंसखे ॥ १४ ॥ मयैतत्कृतमित्यस्योपरिसम्भृतसाहसः । असत्यमलिखन्मित्रधर्म्मन्त्यक्त्वाऽसकौकुधीः ॥ १५ ॥ विदुषामपिधीर्ह्लोभादविनिर्ज्जितचेतसाम् । विषयासङ्गिनाम्प्रायस्सन्मार्गात्स्खलतिध्रुवम् ॥ १६ ॥ लक्ष्मीनारायणस्तस्मान्मान्योनाऽन्योऽतिवञ्चकः । प्राणप्रियेदमस्माभिस्सत्यंनिश्चित्यगद्यते ॥ १७ ॥ मित्रप्रोक्तामममूम्वाणीमाकर्ण्यकृतनिर्णयः । लब्धवर्णस्समुद्राणाङ्कवयेऽस्मैशतन्ददौ ॥ १८ ॥ प्रतिष्ठांमहतीम्प्राप्यगर्वंनैवाऽयमासदत् । वशिनोहिसुखेदुःखेभवन्तिसमवृत्तयः ॥ १९ ॥ अथस्वकीर्त्तिसन्दोहनिन्दितेन्दोरुमापतेः । अयोध्यावासिनश्शिष्यस्सङ्ख्यावत्प्रवरः प्रियः ॥ २० ॥

सरयूतीरगभ्राजद्गणेशपुरसंश्रयः । सदाचारचणोरामचरणोनामकोविदः ॥ २१ ॥ केनाऽपिधीमताश्लोकाएतेविवृतिभूषिताः । कर्त्तव्याः कृपयायत्नादित्यालिख्यमहाशयः ॥ २२ ॥ रामनाथाभिधानायश्लोकैः कतिपयैर्युतम् । पत्रंवाराणसीस्थायनिजान्तेवासिनेऽदिशत् ॥ २३ ॥ कलापकम्

श्लोकान्पत्रगतान्दृष्टाकाशीस्थास्तान्मनीषिणः । रामनाथंसमानीतान्वभूवुश्चकिताभृशम् ॥ २४ ॥ ततस्सुकविनाऽनेनप्रीतिपूरितचेतसा । श्लोकानांरुचिरातेषांयथावद्विवृतिःकृता ॥ २५ ॥

प्रेषितांरामनाथेनश्लोकव्याख्यांमनोरमाम् । तामालोक्यसुधीरामचरणोऽमोदताऽधिकम् ॥ २६ ॥ ततस्तस्यकवीन्द्रेऽस्मिन्प्रीतिराविरभूत्परा । लोको-

असकौधूर्त्तः एतत्प्रशस्तिसप्तकम् मयाकृतम् इति अस्यप्रशस्तिसप्तकस्य उपरि असत्यंमिथ्या अलिखत् स्पष्टमितरत् ॥ १५ ॥ विदुषामिति स्पष्टमेतत् ॥ १६ ॥ लक्ष्मीतिस्पष्टम् ॥ १७ ॥ मित्रेति लब्धवर्णोविचक्षणःपण्डितइतियावत् सः कोष्ठपालः श्रीरघुनाथप्रसादः मित्रेण रायसङ्कटाप्रसादनाम्नाक्षत्रियवरेण प्रोक्तांकथिताम् अमूम्पूर्वोक्ताम् वाणीम् आकर्ण्यश्रुत्वा कृतनिर्णयः इदमेवसत्यमिति समवाप्तनिश्चयः सन् अस्मैलक्ष्मीनारायणायकवये मुद्राणांराजतीनाम् इतियावत् शतम् ददावर्प्पितवान् ॥ १८ ॥

प्रतिष्ठामिति स्पष्टमेवेदम् ॥ १९ ॥ अथेति अथ उमापतेः त्रिपाठिनः पण्डितचक्रवर्त्तिनः ख्यातकीर्त्तेः महानुभावस्य उमापतिशर्म्मणः शिष्यः रामचरणोनाम कोविदोविद्वान् एते श्लोकाः केनापिधीमताविदुषा कृपयायत्नाद्विवृतिभूषिताःकर्त्तव्याः विधेयाः इत्यालिख्य रामनाथाभिधानाय निजान्तेवासिनेस्वशिष्याय कतिपयैःपद्यैर्युतम् पत्रम् अदिशत् स्पष्टमन्यत् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ श्लोकानिति स्पष्टमेवैतत् ॥ २४ ॥ ततइति अनेन श्रीलक्ष्मीनारायणेन स्पष्टमन्यत ॥ २५ ॥ प्रेषितामिति ताम् सुकविलक्ष्मीनारायणनिर्म्मिताम् अमोदता-

त्तरमतेस्तस्मिन्नस्यापिगुणभूषणे ॥ २७ ॥ अथतत्प्रेरणाद्विद्वानेपव्यरचयत्तनुम् । ग्रन्थन्दृश्यतमंनामकायस्थकुलभास्करम् ॥ २८ ॥ विद्वद्भिर्मानितस्यासौतस्यव्याख्याम्प्रभाभिधाम् । रमणीयतमांयत्नात्ततोऽकार्षीत्कविस्स्वयम् ॥ २९ ॥ प्रसिद्धस्साधुशीलाढ्यस्सम्मतोविलसन्मतिः । वदायूनगरस्थायीकायस्थप्रवरस्ततः ॥ ३० ॥

श्रीमान्नौवतरायाख्योग्रन्थं सव्याख्यमुत्तमम् अमुद्रयत्प्रसन्नान्तःकरणस्तंद्रुतंमुदा ॥३१॥ युग्मम् ॥ कायस्थक्षत्रियत्वघ्नकुठारंनामखण्डनम् । प्रेरितोऽयङ्कविस्तेनप्रबन्धंनिरमात्ततः ॥ ३२ ॥ विलक्षणगुणारीणोदोषहीनमतिस्ततः । श्रीरामचरणोऽस्याज्ञांविनयीबहुमानयन् ॥ ३३ ॥ देवीमहिम्नएनेनदेवीनीराजनस्यच । रामस्तोत्रस्यचव्याख्यांविहितस्यविनिर्म्ममौ ॥ ३४ ॥ युग्मम् ॥ श्रीकाशीरत्नमालाख्योभक्त्यानेनततस्सता । सगङ्गालहरीसञ्ज्ञःप्रबन्धःपरिगुम्फितः ॥ ३५ ॥ ततोयोगीन्द्रगोरक्षनाथनिर्मितमुत्तमम् । मुक्तिसोपाननामानंग्रन्थंव्याख्यातवानसौ ॥ ३६ ॥

दृष्यत् अन्यत्स्पष्टम् ॥ २६ ॥ ततइति तस्य रामचरणस्याविदुषः अस्मिन्सुकविलक्ष्मीनारायणे अस्यलक्ष्मीनारायणस्यसुकवेः तस्मिन्विदुषिश्रीरामचरणे स्पष्टमन्यत ॥ २७ ॥ अथेति एषः लक्ष्मीनारायणाख्यः सुकविः तस्यश्रीरामचरणस्य प्रेरणात् कायस्थकुलभास्करम् नाम ग्रन्थम् व्यरचयत् स्पष्टमितरत् ॥ २८ ॥

विद्वद्भिरिति ततः असौकविः स्वयमेवतस्यकायस्थकुलभास्करस्यनामग्रन्थस्य प्रभाभिधाम् व्याख्याम् अकार्षीत् ॥२९॥ प्रसिद्धइति ततः श्रीमान् नौवतरायाख्यःकायस्थप्रवरः सव्याख्यंव्याख्ययासमेतम् तम् कायस्थकुलभास्करंनामग्रन्थम् मुदाप्रीत्या अमुद्रयत् स्पष्टमन्यत् ॥ ३० ॥ ३१ ॥ युग्मम् कायस्थेति ततः तेननौवतरायनाम्नाकायस्थोत्तमेन प्रेरितः अयंलक्ष्मीनारायणः कविः कायस्थक्षत्रियत्वघ्नकुठारम् नामेतिप्रसिद्धौ खण्डनम् नाम प्रबन्धम् निरमान्निर्ममौ ॥ ३२ ॥

विलक्षणेति ततः श्रीरामचरणः अस्यश्रीलक्ष्मीनारायणस्यसुकवेः आज्ञाम्बहुमानयन् सत्कुर्वन् एनेन श्रीलक्ष्मीनारायणेन विहितस्यनिर्म्मितस्य देवीमहिम्नः तथादेवीनीराजनस्य तथा श्रीरामस्तोत्रस्य व्याख्याम् विनिर्म्ममौ स्पष्टमन्यत् युग्मम् ॥ ३३ ॥ ३४ ॥ श्रीति ततः अनेन लक्ष्मीनारायणेनकवीन्द्रेणसगङ्गालहरीसञ्ज्ञः गङ्गालहरीशतकसञ्ज्ञेन गङ्गामहात्म्येनसहितः श्रीकाशीरत्नमालाख्यः प्रबन्धः भक्त्या परिगुम्फितोरचितः ॥ ३५ ॥ ततइति असौलक्ष्मीनारायणः सुकविः स्पष्टमितरत् ॥ ३६ ॥ अशीतीति सुकविः अयंलक्ष्मीनारायणः इत्थम्पूर्वोक्तरीत्या अशीत्यधिकसङ्ख्यकान् प्रबन्धान् व्यरचयत् कीदृशोऽयम् पुरुप्रक-

अशीत्यधिकसख्यकान्सुकविरित्थमुच्चावचा— नुदारमतिरुत्तमान्बुधमनोहरार्थान्भृशम् ॥ पुरुप्रकटितोत्कटाऽकपटभृत्पटुत्वच्छटस्समङ्गलमहोदयोव्यरचयत्प्रबन्धानयम् ॥ ३७ ॥ श्रीदुःखभञ्जनकवीन्द्रतनूजनुःश्रीदेविप्रसादकविनाविहितेनिबन्धे। सर्गस्समाप्तिमिहसद्रमणीयलक्ष्मीनारायणीयचरितेऽष्टमएषयातः ॥ ३८ ॥

इतिश्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जनशर्मात्मजकविवरदेविप्रसादनिर्मिते कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायण शर्मजीवनचरितात्मके मङ्गलाङ्के लक्ष्मीनारायणकाव्ये अष्टमः सर्गः ॥ ८ ॥

टिताः बहुप्रकाशिताः उत्कटामहत्यः अकपटभृतः पटुत्वच्छटाश्चातुर्यस्फूर्त्तयः येनयस्यवा सः इतरत् स्पष्टम् पृथ्वीवृत्तम् ॥ ३७ ॥ श्रीति इहनिबन्धे एषः अष्टमस्सर्गः समाप्तिम् यातःप्राप्तः इतरत्पूर्ववत् ॥ ३८ ॥

इतीति स्पष्टम् ॥ ८ ॥ इतिश्रीस्वकृतस्य कौशल्यगोत्रोद्भवकविवरलक्ष्मीनायणशर्मजीवनचरितात्मकस्य मङ्गलाङ्कस्यलक्ष्मीनारायणकाव्यस्य सुमङ्गलाख्यायांव्याख्यायामष्टमस्सर्गस्समाप्तः ।८।

---

## नवमः सर्गः ।

अथनिन्दितेन्दुरुदिताऽविरतंविदिताजनैर्जनितमोदभरा। हरिदन्तराणिरमणीयतरासुकवेरमुष्यकिलकीर्त्तिरगात् ॥ १ ॥ परमः प्रभावनिवहोऽस्यतथावहुवृद्धिमापदनिशम्प्रसरन् , उपगन्तुमैहतयथातरणिस्तमवेक्ष्यलज्जितइवास्तगिरिम् ॥ २ ॥ सलिलेशदिङ्मुखगतोविलसद्बहुशोणवर्णकिरणस्तरणिः । वरवृत्तचित्रकनिभोदिवसावसितौययौरुचिरतांनित

अथेति तस्य लक्ष्मीनारायणस्य जनितमोदभरा समुत्पादितहर्षातिशया हरिदन्तराणिदिगन्तराणि स्पष्टमन्यत् अस्मिन्सर्गे प्रमिताक्षरावृत्तम् लक्षणन्तु प्रमिताक्षरासजससैः कथितेति वाग्वल्लभे उक्तम् ॥ १ ॥ परमइति अस्यलक्ष्मीनारायणस्य तरणिस्सूर्यः ऐहत अचेष्टत स्पष्टमितरत् ॥ २ ॥ सलिलेति वरवृत्तचित्रकनिभः उत्तमगोलतिलकतुल्यः दिवसावसितौसायङ्काले स्पष्टमन्यत् ॥ ३ ॥

राम् ॥ ३ ॥ परितापयन्दिनमणिर्भुवनान्यधिकंविनाशमगमत्सहसा । परदुःखदाःकिमुकदाऽपिचिरस्थिरताम्प्रयान्तिजगतीहजनाः ॥ ४ ।

उदयेनयस्यजगतोविततम्परिसंहृतंनिखिलमाशुतमः सविभाकरोऽपिकिलकालवशात्क्षयमापकान्यपुरुषस्यकथा ॥ ५ ॥ कमलानिवासरकरेऽस्तमितेसपदिश्रियाविरहितान्यभवन् । नहिमित्रनाशमवलोक्यरुचिन्दधतेमनोहरतयासहिताः ॥ ६ ॥ रविरस्तमापदितिकोकयुगम्पुरुशोकतप्तमभवद्विधुरम् । तिमरोदयःप्रभवतीतितदाऽलभताधिकांमुदमुलूकगणः ७

अथवेदबोधितमवाधगुणोऽधिसमाप्यसान्ध्यविधिमेषकविः । अभवन्महामुदितमानिमनास्समयस्यतस्यरमणीयतया ॥ ८ ॥ अतिसन्तताविलसितास्सुतरामवलोकिताःकलितहर्षचयम् । वरवज्रचारुशकलामलभादिवितारकाविदधुरस्यमनः ॥ ९ ॥ तमसिप्रसर्प्पतिनिरूढमदामदनप्रभावपरिधूतभयाः । विभृतत्वराबहुलसद्गतयस्सुदृशस्वबल्लभगृहान्प्रययुः ॥ १० ॥

अथचन्द्रमास्समुदितोजगतीगतमन्धकारनिकरङ्किरणैः । परिभासुरैरहरदाशुलसन्मलिनंविनाशयतिकिन्नमहान् ॥ ११ ॥ रजनीकरेविरहिणीवदनान्यभवन्महामलिनभान्युदिते । द्विषतःप्रभावमवलोक्यजनानरु-

परितापयन्निति स्पष्टमेवप्रतिभाति ॥ ४ ॥ उदयेनेति स्पष्टम् जगतीविततमितिपाठे जगत्याम् विततमितिसप्तमीसमासः ॥ ५ ॥ कमलानीति मित्रनाशंसूर्यभावम् सुहृदापत्तिञ्च रुचिंशोभाम् प्रीतिञ्च स्पष्टमन्यत् ॥ ६ ॥ रविरिति कोकयुगञ्चक्रवाकमिथुनम् जातावेकवचनम् विधुरंविह्वलम् स्पष्टमन्यत् ॥ ७ ॥

अथेति अथान्तरम् अबाधगुणस्स्थिरगुणः एषः लक्ष्मीनारायणःकविः वेदबोधितंश्रुतिप्रतिपादितानुष्ठानम् सान्ध्यविधिसन्ध्योपासनादिरूपम् अधिसमाप्य तस्यसमयस्य रमणीयतया महामुदितम् आत्मानंमन्यतेइति महामुदितमानि एवम्भूतम् मनोयस्य तथाविधोऽभवत् ॥ ८ ॥ अतिसन्तताइति दिवि आकाशे अतिसन्तताः तारकाः अवलोकिताः सत्यः अमुनैवेतियावत् अस्य लक्ष्मीनाराणस्यकवेः मनः कलितहर्षचयम् विदधुः कथम्भूतास्तारकाः वरवज्रचारुशकलामलभाः श्रेष्ठतरहीरकमञ्जुलखण्डस्वच्छकान्तयः ॥ ९ ॥ तमसीति तमस्यन्धकारे प्रसर्प्पतिप्रसरतिसति विभृताविशेषेणधृता निभृतावात्वरया बहुलसन्ती बहुलासतीवा गतिर्याभिर्यासांवाताः यद्वा विभृतात्वरायाभिस्ताः इतिपृथक् तथा बहुलसद्गतयः इति पृथक् पदम् सुदृशश्शोभननयनाः कृष्णाभिसारिकाइतियावत् सुदृशइतिपदेन अन्धकारसमूहसद्भावेऽपि मार्गावलोकनम् व्यज्यते ॥ १० ॥ अथेति स्पष्टम्प्रतिभासते ॥ ११ ॥

चिम्प्रयान्तिखलुसत्यमिदम् ॥ १२ ॥ द्विजराजतामुपगतोऽपिमहा कमनीयमूर्त्तिरपि शीतकरः परितापकोविरहिणामुदभूदथवाकलङ्किनइयम्प्रकृतिः ॥ १३ ॥ कुमुदानिचन्द्रमवलोक्यमुदांसमवापुरुद्गतमरंनिकरम् । उदितेहिराजनिमनोज्ञतमेलभतेनकःसुखसमूहमिह ॥ १४ ॥ रमणीयमण्डलमवेक्ष्यविधुञ्जलधिस्समुल्लसितवानधिकम् नजनस्यकस्यभवतीहमहान्स्वसुतोदयेनमनसिप्रमदः ॥ १५ ॥ नयनैःपिबन्नमृतरश्मिरुचिंमुदितोऽभवद्भृदिचकोरचयः निजमिष्टमेत्यनिखिलो हि जनोघनमाचिनोतिपरितोषधनम् ॥ १६ ॥ सुषुमासमूहसहितंरजनी शशिनंसमेत्यसुतरांशुशुभे । निजवल्लभस्यशुभसङ्गमतोदयितानकारुचिभरंलभते ॥ १७ ॥

परिपूर्णचन्द्रवदनाविलसत्तरतारकाकुमुदहासवती । सितचन्द्रिकापटवृतारजनीरमणीमनोरमगुणारुरुचे ॥ १८ ॥ अथतल्पमुत्तमतमंसकविर्मृदुतूलगर्भरुचिरास्तरणम् । अधिशय्यनिद्रितविलोचनभाक्समयानुरूपसुखमन्वभवत् ॥ १९ ॥ विगलद्द्युतीन्दुरभिलीनतनुप्रभतारकावलिविलासमिता । अवसानमापदचिरात्क्षणदाविधिकौतुकम्बहुविचित्रमहो ॥२०॥

गतान्त्रियामामवलोक्यमुग्धस्सद्योऽतिमन्दद्युतिरिन्दुरासीत् । स्ववल्लभायाविरहस्समन्तात्कंम्पूरुषंनोदहतीहलोके ॥ २१ ॥ अस्तंप्रयातेकुमु-

रजनीति रजनीकरेचन्द्रे उदितेसति द्विषतः शत्रोः रुचिंशोभांप्रीतिञ्च स्पष्टमन्यत् ॥ १२ ॥ द्विजराजतामिति स्पष्टमेतत्प्रतिभाति ॥ १३ ॥ कुमुदानीति कुमुदानिकैरवाणि चन्द्रम् उद्गतमुदितम् अवलोक्य मुदांनिकरम् अरंशीघ्रम् समवापुः कुतः हियतः इह मनोज्ञतमे राजनिचन्द्रे पार्थिवेच राजातुपार्थिवे निशाकरेप्रभौशक्रे यक्षक्षत्रिययोरपीतिहेमचन्द्रः उदितेसति कः सुखसमूहम् नलभते अपितु सर्वोऽपिलभते इतिभावः ॥ १४ ॥ रमणीयेति स्पष्टमिदम् ॥१५॥

नयनैरिति घनंनिविडम् स्पष्टमन्यत् ॥ १६ ॥ सुषुमेति रुचिभरंशोभातिशयम्प्रीत्यतिशयञ्च स्पष्टमितरत् ॥ १७ ॥ परिपूर्णेति विलसत्तराः तारकाउडूनि अक्षिकनीनिकेचयस्याः रजन्येवरमणी रुरुचेदिदीपे विशेषणानिस्पष्टानि ।१८। अथेति सः कविर्लक्ष्मीनारायणः उत्तमतममत्युत्तमम् मृदुतूलगर्भरुचिरमास्तरणंयस्यतत्तल्पम् पर्य्यङ्कमितियावत् अधिशय्य निद्रिते विलोचने भजतीतितथाभूतः सन् समयानुरूपम् सुखमन्वभवत् ॥ १९ ॥ विगलदिति विगलन्तीनश्यन्ती द्युतिः प्रकाशोयस्या एवम्भूतः इन्दुर्यस्याम् सा अभिलीनानाम् अतएव तनुप्रमाणाम् तारकावलीनाम् विलासम् स्फुरणम् इताप्राप्ता क्षणदारात्रिः अन्यत्स्पष्टम् ॥ २० ॥ गतामिति त्रियामांरजनीम् मुग्धोमूढस्सुन्दरश्च स्पष्टमन्यत्

दानिचन्द्रेतन्द्राग्विताान्याविलभान्यभूवन् निरोषधीशेविषयेनकस्यव्याधि-स्तनोस्तापततिन्तनोति ॥ २२ ॥ विनीतनिद्रस्सकविस्तदानीमुत्थायतल्पात्कृतनित्यकृत्यः । तत्कालशोभामवलोकमानोमानोन्नतश्रीरधिकंविरेजे ॥ २३ ॥ हरन्नशेषन्तिमिरस्यभारन्ताराश्चतेजःप्रसरंवितन्वन् । अस्तोकशोकाकुलकोकलोकंप्रह्लादयन्सन्नुदियायभानुः ॥ २४ ॥ पद्मानि-भास्वन्तमवेक्ष्यदूरादायान्तमासन्विकसद्दलानि । प्रोष्यागतंमित्रमवाप्यकस्यस्वान्तेमहान्नोभवतिप्रमोदः ॥ २५ ॥ परप्रतापन्तपनीयवर्णप्रणम्यसूरञ्जनकामपूरम् । लोकैरशेषैस्स्तुतमेषधीरःकार्य्यान्तरंप्रारभतेस्महर्षात् २६

अथेद्धकान्तिःपरिवृद्धशान्तिर्विशुद्धबुद्धिस्सुखसिद्धिशाली । अनेकतीर्थाटनजन्यपुण्यप्रकर्षदूरीकृतपापतापः ॥ २७ ॥ सहस्वपत्न्याशुभकृत्यशोभीप्रसन्नतापन्नमनास्सुशीलः • पुरुप्रभावप्रभवोरुकीर्त्तेरमुष्यकाशीन्तनयस्समागात् ॥ २८ ॥ युग्मम् आत्मजमासंवीक्ष्यवधूयुक्तमगादीन्यद्धदनः । चेतसिगोपीचन्द्रमसौसत्कविरामोदातिशयम् ॥ २९ ॥ मङ्गलशालीचम्पकमालाकोमलकाम्याकारशरीरः । एषमनीषीपूर्णकुटुम्बःकामपिसद्भाग्योऽभृतशोभाम् ॥ ३० ॥ श्रीदुःखभञ्जनकवीन्द्रतनूजनुःश्रीदेविप्रसादक

उपजातिर्वृत्तम् ॥ २१ ॥ अस्तमिति तन्द्रान्वितानि मुकुलितानीतियावत् आविलभानि मलिनकान्तीनि निरोषधीशेचन्द्ररहिते वैद्यरहितेच स्पष्टमन्यत् ॥ २२ ॥ विनीतेति विनीतनिद्रोऽपगतनिद्रः सः लक्ष्मीनारायणःकविः तल्पात्पर्य्यङ्कतः स्पष्टमन्यत् ॥ २३ ॥ हरन्निति स्पष्टमेव ॥ २४ ॥ पद्मानीति मित्रंसखायंसूर्य्यञ्च स्पष्टमन्यत् ॥ २५ ॥ परेति तपनीयवर्णंस्वर्णवर्णम् सूरंसूर्यम् एषः लक्ष्मीनारायणःकविः स्पष्टमितरत् ॥ २६ ॥ अथेति पुरुप्रभावप्रभवामहाप्रभावजन्या उरुर्महतीकीर्त्तिर्यशः यस्यतस्य अमुष्य लक्ष्मीनारायणस्यकवेः तनयःपुत्रः गोपीचन्द्रोनाम स्वपत्न्यास्वभार्यया सह काशीम् समागात् कीदृशः इद्धादीप्ता कान्तिर्यस्यसः अथच अनेकतीर्थाटनजन्येन पुण्यप्रकर्षेण दूरीकृताविनाशितः पापतापोयस्यसः स्पष्टमन्यत् ॥ २७ ॥ २८॥ युग्मम् आत्मजेति असौ लक्ष्मीनारायणःकविः आमोदातिशयंहर्षातिरेकम् अगात् स्पष्टमन्यत् ॥ २९ ॥

मङ्गलेति एषः लक्ष्मीनारायणःकविः पु. की. चम्पकानाम् मालेव कोमलंमृदुलम् अतएवकाम्याकारम् रम्याकृति शरीरंयस्यसः अभृतबभार इतरत्स्पष्टम् चम्पकमालावृत्तम् लक्षणन्तु चम्पकमालायत्रभमसगाः इतिवाग्वल्लभे ॥ ३० ॥ श्रीति इह निबन्धे अयम् नवमस्सर्गःसमाप्तिम् गतः प्राप्तः इतरत्स्पष्टम् ॥ ३१ ॥

विनाविहितेनिवन्धे । सर्गस्समाप्तिमिहसद्रमणीयलक्ष्मीनारायणीयचरितेनव मोगतोऽयम् ॥ ३१ ॥

इतिश्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जशर्म्मात्मजकविवरदेविप्रसादनिर्म्मिते कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणशर्म्मजीवनचरितात्मके मङ्गलाङ्के लक्ष्मीनारायणकाव्ये नवमस्सर्गः ॥ ९ ॥

---

वसन्ततिलकाछन्दः इतीति स्पष्टम् ॥ ९ ॥ इति श्रीस्वकृतस्य कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणशर्मजीवनचरितात्मकस्य मङ्गलाङ्कस्य लक्ष्मीनारायणकाव्यस्य सुमङ्गलाख्यांव्याख्यास्याम् नवमस्सर्गस्समाप्तः ॥ ९ ॥

---

# दशमः सर्गः ।

जलधिश्रुतिनन्दभूमिते ऽवरवर्षेसहसीशभाविनी । अतिसञ्चितपुण्यसन्ततिर्हतपापामृदुलस्वभाविनी ॥ १ ॥ अपहायतनुन्ततोहिताकमनीयाकृतिराप्तसत्कृतिः । दयितासमियायमङ्गलापदमुच्चैर्वरवर्णिनीकवेः ।२। युग्मम्

जलधीति ततः कवेर्लक्ष्मीनारायणस्य दयिताप्रिया मङ्गला मङ्गलस्वभावत्वात् मङ्गलेतिनामधेया जलधिश्रुतिनन्दभूमिते चतुश्चत्वारिंशदधिकैकोनविंशतितमे अवरवर्षे अनुत्तमवत्सरे सहसिमार्गशीर्षेमासि तनुम् शरीरम् अपहाय परित्यज्य उच्चैः पदंमोक्षमितियावत् समियायप्रापकीदृशीसा मृदुलस्वभाविनीकोमलप्रकृतिः यद्वा मृदुलाकरुणामसृणमनस्कत्वादन्तः कोमलाचासौ स्वभाविनीप्रशस्तस्वभावभूषिताच सातथोक्ता प्रशंसार्थेइनिः यद्वा मृदुलाकोमला शान्तेतियावत् साचासौ स्वस्याः स्वेषांवायाभा सद्गुणसम्पत्तिजनिता दीप्तिः ताम् अवतिरक्षतीतिसातथोक्ता पु. की. वरवर्णिनी उष्णस्पर्शवतीशीतेशीतस्पर्शातपात्यये भर्तृभक्ताचयानारीसाज्ञेयावरवर्णिनी इत्युक्तलक्षणेतियावत् ईशंमहादेवम्भावयति समाश्रयते सातथोक्ता ईशेभावोभक्तिः सोऽस्याअस्तीति वा सातथोक्ता इतरत्स्पष्टम् सुन्दरीच्छन्दः अयुजोर्य्यदिसौजगौयुजोस्सभरालगौनतुसुन्दरीमितेतितल्लक्षणं वाग्वल्लभे ॥ १ ॥ २ ॥ युग्मम् । अतिशोकेति अतिशोकसमाकुलः करुणायाः दयायाः करुणस्यरसस्य वा अम्भोधिस्समुद्रः असौ लक्ष्मीनारायणःकवीन्द्रः हतोत्सवःखिन्नमानसस्सन् तदनन्तरकालसम्भवाः मरणानन्तरभाविनीः क्रियाः

अतिशोकसमाकुलस्तदा करुणाम्भोधिरसौयथाविधि । तदनन्तरकालसम्भवाविदधातिस्महतोत्सवःक्रियाः ॥ ३ ॥ सुभगोऽथयुवासुखोचितः कृततीर्थाटनपुण्यसङ्ग्रहः । अभवद्बहुरोगसङ्गमात्तनयोऽमुष्यतताऽतितापभाक् ॥४॥ अथवारशराङ्कभूमितेऽसुखदेऽब्देकिलकार्त्तिकेसिते । कृतपुण्यपरम्परःपरःपरमश्रीःपरिपूतमानसः ॥ ५ ॥ अनिवार्यगदप्रपीडितस्ततएतस्यमहाकवेस्सुतः । प्रतिकूलविधेर्नियोगतस्तनुमायाससहांस हाऽजहात् ॥६॥ युग्मम् तनयस्यनिरीक्ष्यतान्दशाङ्घनशोकाविलदूनमानसः । कुलिशेनहृदीवताडितस्समहामोहमितःपरापतत् ॥ ७ ॥ समवाप्यततस्सचेतनांहतदैवेनमहाधिमापितः । अवलम्बितसूनुरातुरोऽन्यलपत्प्रोज्झितधीरतोभृशम् ॥ ८ ॥

अयिदैव कुतस्त्वमीदृशम्बहुदुःखन्ददसे पुनः पुनः । नहितेहृदयन्दयामनागपिपापाविलमाश्रयत्यहो ॥ ९ ॥ तवदैव चरित्रमीदृशञ्जनदुःखप्रदमेवदृश्यते । किमनेनफलन्त्वयाऽऽप्यते भवतःकिंसुगतिर्भविष्यति ॥१०॥

तवचेष्टितमप्रगल्भवद्विपरीतम्परिदृश्यतेजनैः । हतदैवनिजामिमाञ्जहिप्रकृतिन्त्वंव्यसनप्रदान्द्रुतम् । ११ ॥ अनयाविपरीतचेष्टयातवकाकीर्त्तिरहोभविष्यनि । कथमीदृगसंस्तुता भवन्मतिरुत्थावतवेत्तिकोऽपिकिम् ।१२। हतदैवमहाविमूढधीस्त्वमसीतिप्रविचिन्तितंमया । यदयम्फलदोमुधातरुस्सहसैवाशुविनाशितस्त्वया ॥ १३ ॥ अयिमान्त्वममन्तुमन्तिकास्थितिमन्तम्परिहायहासुत । अविपह्यवियोगवेदनम्परलोकन्त्वरितःकुतोऽगमः ॥ १४ ॥

दाहादिकानिकर्म्माणि यथाविधि शास्त्रोक्तविध्यनुकूलम् विदधातिस्म अकार्षीत् ॥ ३ ॥ सुभगइति अथ अमुष्यकवीन्द्रस्यलक्ष्मीनारायणस्य तनयस्तनूजः गोपीचन्द्रः बहुरोगसङ्गमात् तताऽतितापभाक् बहुलतरतापयुक्तः अभवत् स्पष्टमितरत् ॥ ४ ॥ अथेति अथ सः पूर्वोक्तः एतस्य लक्ष्मीनारायणस्यसुकवेः सुतः पुत्रः गोपीचन्द्रः वारशराङ्कभूमिते सप्तपञ्चाशदधिकैकोनविंशतितमे असुखदे दुःखदायिनि अब्देवर्षे कार्तिकमासि सितेशुक्लेपक्षे प्रतिकूलविधेर्विरुद्धदैवस्य नियोगतः आज्ञातः आयाससहांश्रमवतीमितियावत् तनुंशरीरम् अजहात् अत्यजत् हेतिखेदे स्पष्टमन्यत् युग्मम् ॥ ५ ॥ ६ ॥ तनयस्येति सः लक्ष्मीनारायणस्सत्कविः स्पष्टमितरत् ॥ ७ ॥ समवाप्येति ततः सः कविवरोलक्ष्मीनारायणः महाधिम् महतींमानसींव्यथाम् आपितःप्रापितः अवलम्बितोहस्तधृतः सूनुर्म्मृतपुत्रोयेनसः अन्यत्स्पष्टम् ॥ ८ ॥ अयीति स्पष्टमेवैतत् ॥ ९ ॥ तवेति स्पष्टम् ॥१०॥ तवेतिस्पष्टम् ॥११॥ अनयेति स्पष्टम् ॥१२॥ हतेति स्पष्टम् ॥१३॥

यदिकोऽपिमयाऽथवाप्रमादपराधोविहितोविचेतसा। अविलम्बितमा-त्मजत्वयासखमर्तहिकथंनकथ्यते ॥ १५ ॥ उचितंनकृतंसुतत्वया यदकालेचलितोऽसिसत्वरम्। ननुसत्यमिदंमयोच्यतेभवतोऽन्योभुविकोऽपिनप्रियः ॥ १६ ॥ विनिमीलितमञ्जुलोचनङ्कुटिलाऽलोलकचातिरोचितम् तवमामधुनातमोपहप्रतिमन्तापयतीदमाननम् ॥ १७ ॥ अतिदुस्तरदुःखदायिनङ्कुलसंहारविधायिनम्परम्। मदभाग्यसमूहमुन्नतम्भुविवक्तुम्पुरुषःकईश्वरः ॥ १८ ॥ दुरितम्बहुशःकृतंमया गतजन्मन्यधुनाऽनुमीयते। यतएतदुपस्थितम्फलङ्कटुकष्टप्रदमिष्टतोज्झितम् ॥ १९ ॥ जगतीहमयासमःपुमान्नतिपापप्रभवोनविद्यते। यदनेकविधातिदुस्सहव्यसनासङ्गवशेन खिद्यते ।२०।

सुतनिष्ठुरताकथन्त्वयाहृदयेहानिहिताऽधुनानिजे। परितप्तमुपाचदुर्दशम्पितरंमामवलोच्यताञ्जहि ॥ २१ ॥ प्रियपुत्रविलप्यतेमयामलिनान्तःकरणेनसम्प्रति। सदयस्त्वमहोकथंनमांमधुराभिर्निजवाग्भिरश्वसि ॥ २२ ॥

इतिसम्प्रविलप्यदीनतानतचेतावहुविह्वलोऽवलः। पुनरप्यवलीनलोचनोघनतापोऽयममूर्च्छदुचकैः ॥ २३ ॥ अथपार्श्वगताहिताजनाजलसेकादिविधिन्तथाऽऽचरन् अतिदूनतयाभृतोयथाऽभवदेषप्रतिबुद्धचेतनः२४

सहजंनिजधैर्यमागतो। वलनिर्वासितमोहसन्ततिः इयमेवशरीरधारिणाङ्गतिरस्तीतिविचिन्त्यसोऽश्वसीत् ॥ २५ ॥ अथभूरिभिरानतैर्हितैस्स्वजनैस्साकमसौवशीरुदन् तनयस्यसमाहितोऽकरोन्मरणानन्तरसम्भवाःक्रियाः ॥ २६ ॥ अशुचिर्दिवसानिदाहकृद्दशनीत्वाऽथविशुद्धिभागसौ।

अयीति अमन्तुंनिरपराधम् अन्तिकस्थितिमन्तम् समीपवर्त्तिनम् स्पष्टमन्यत् ॥ १४ ॥ यदीति सः अपराधः सुखम् यथातथा स्पष्टमन्यत् ॥ १५ ॥

उचितमितिस्पष्टम् ॥ १६ ॥ विनिमीलितमिति स्पष्टम् ॥१७॥ अतिदुस्तरेति स्पष्टम् ॥ १८ ॥ दुरितमिति स्पष्टम् ॥ १९ ॥ जगतीति स्पष्टम् ॥२०॥ सुतेतिस्पष्टम् ॥ २१ ॥ प्रियेति स्पष्टम् ॥ २२ ॥ इतीति दीनतयानतश्चेतोयस्यसः अवलीनलोचनोमीलितनेत्रः अयम् कवीन्द्रोलक्ष्मीनारायणः अमूर्च्छत् स्पष्टमितरत् ॥ २३ ॥ अथेति स्पष्टम् ॥ २४ ॥ सहजमिति सहजंस्वभाविकम् निजधैर्यम् आगतःप्राप्तः बलेननिर्वासितादूरीकृता मोहसन्ततिर्येनसः सः कवीन्द्रोलक्ष्मीनारायणः इयंमरणरूपा शरीरधारिणाम्प्राणिनाम् गतिरस्त्येवेतिविचिन्त्य अश्वसीत् ॥ २५ ॥ अथेति भूरिभिर्बहुभिः साकंसह वशीजितेन्द्रियः समाहितः सावधानः स्पष्टमन्यत् ॥ २६ ॥ अशुचिरिति दाहकृत् मृतसुतशरीरदहनकर्त्ता

बहुमोदकमन्नमुत्तमंमधुरम्भोजयतिस्मभूसुरान् ॥ २७ ॥ इतिकृतशास्त्रोदितविधिरेषः परिचितवेगस्समवहतिशोकम् ॥ २८ ॥ सुतेनहीनोहितकरिणाऽयन्दुर्दैवदोषोदितदुःखभारः भूमण्डलंशून्यमिवप्रतप्तःपश्यन्नकिञ्चित्करणीयमैच्छत् ॥२९॥ आलोक्यासौ सूनोर्भार्याविश्वस्तामास्तानन्दाम् उच्चैर्मन्दाभास्योभूयोभूयस्तापव्यूहम्प्रापत ॥ ३० ॥ उज्झितशोभश्शोकसमेतः एषादिनस्थश्चन्द्रइवासीत् ॥ ३१ ॥ मङ्गलहीनन्दीनतरोऽसौ वीक्ष्यगृहंस्वंनोमुदमापत् ॥ ३२ ॥ श्रीदुःखभञ्जनकवीन्द्रतनूजनुःश्रीदेविप्रसादकविनाविहितोनिबन्धे सर्गस्समाप्तिमसकौरमणीयलक्ष्मीनारायणीयचरितेदशमोगतोऽस्मिन् ॥ ३३ ॥

इति श्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःख भञ्जनशर्मात्मजकविवरदेविप्रसादनिर्म्मिते कौशल्यगोत्रोद्भवककविवरलक्ष्मीनारायणशर्मजीवनचरितात्मके मङ्गलाङ्के लक्ष्मीनारायणकाव्ये दशमस्सर्गः ॥ १० ॥

असौ कवीन्द्रोलक्ष्मीनारायणः दशदिवसानि नीत्वा अथ विशुद्धिभाक् अथ स्वसम्प्रदायानुसारेण सप्तदशेदिवसेइतियावत् भोजयतिस्म भोजयतिस्मेत्यत्रनिगरणचलनार्थेभ्यः इतिपरस्मैपदम् बहवोमोदकाः भाषायाम् लड्डुइतिप्रसिद्धा यस्मिंस्तत् यद्वाबहुमोदयतीतिबहुमोदकम् णिजन्तान्मुदहर्षेइत्यतः ण्वुल्तृचावितिण्वुल्ततःयुवोरनाकौइत्यकादेशः इतरत्स्पष्टम् ॥२७॥ इतीति एषः लक्ष्मीनारायणःकवीन्द्रः परिचितवेगम् वेगयुक्तमितियावत् इतरत्स्पष्टम् शशिवदनावृत्तम् तल्लक्षणन्तु शशिवदनान्याविति वाग्वल्लभे ॥ २८ ॥ सुतेनेति अयंलक्ष्मीनारायणःकविवरः स्पष्टमितरत् ॥ २९ ॥

अलोक्येति मन्दा आभाकान्तिर्यस्य एवम्भूतमास्यंमुखंयस्यसतथोक्तः असौलक्ष्मीनारायणःकविप्रवरः सूनोर्भार्य्यांस्वस्नुषाम् विश्वस्तांविधवाम् अतएव आस्तानन्दाम्प्रध्वस्तप्रमोदाम् आलोक्य भूयोभूयःपुनःपुनः उच्चैरत्यन्तम् तापव्यूहंसन्तापभरम् प्रापत विश्वस्ताविधवासमे इत्यमरः विद्युन्मालावृत्तम् मौगौचेत्स्याद्विद्युन्मालेतितल्लक्षणन्तूक्तंवाग्वल्लभे ॥ ३० ॥ उज्झितेतिस्पष्टम् पङ्क्तिश्छन्दःभ्गौगितिपङ्क्तिरितिवाग्वल्लभे ॥ ३१ ॥ मङ्गलेति असौलक्ष्मीनारायणःकविवरः स्पष्टमितरत् पङ्क्तिश्छन्दः ॥३२॥ श्रीति अस्मिन्निबन्धे असकावसौ दशमस्सर्गः समाप्तिम् गतः इतरत्पूर्वव्याख्यातम् वसन्ततिलकाच्छन्दः॥३३॥

इतिश्रीस्वकृतस्य कौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणशर्मजीवनचरितात्मकस्य मङ्गलाङ्कस्य लक्ष्मीनारायणकाव्यस्य सुमङ्गलाख्यायांव्याख्यायाम् दशमस्सर्गस्समाप्तः ॥ १० ॥

---

# एकादश स्सर्ग्गः ।

विज्ञानज्वलनवलेनमोहजालन्दग्ध्वाऽथोविमलमनास्तनूजपत्नीम् त्रिश्वस्तामितित्रिभृताभितापचिन्तान्धीरोऽसौसमकथमद्गणेशदेवीम् ॥ १ ॥

संसारेजननवतामयेजनानांसंसिद्धंमरणमवश्यमेवतत्र कश्शोकोनिजमनसीतिसम्प्रधार्यक्षिप्रन्त्वंजहिहिवियोगजान्दुराधिम् ॥ २ ॥ एतस्मिन्विधिरचितेपरंप्रपञ्चेयत्किञ्चित्प्रभवतिवस्तुतद्विनाशि यत्साक्षाद्विधिरपिनित्यतांनधत्तेकिञ्चन्यनिजजनकाद्विरुद्धमस्ति ॥ ३ ॥ व्युष्टेऽन्नंश्रपितमसंशयम्प्रदोषेदोषेणश्रितमतिहेयताम्प्रयाति तत्पुष्टेकथयशरीरकेऽस्तिकास्थाव्यर्थःक्रिङ्क्रियतइयानहोविशोकः ॥ ४ ॥ छिद्राणांनवकमसम्भृतम्प्रपन्नेप्राणाद्यायदुतशरीरपञ्जरेऽस्मिन् संवासंविदधतिपञ्चपक्षिणोऽमीताचित्रङ्किमुनमनस्युदेतिहाते ॥ ५ ॥ आत्माऽयञ्जननविनाशिताविहीनश्चिद्रूपस्सततसुखास्पदत्वमाप्तः देहस्तुक्षितिसलिलादिपञ्चभूतैस्संसृष्टःकिमितिविचार्यतेनचित्ते ॥ ६ ॥ तस्मात्त्वङ्किमुकुरुषेमुधाऽतिखेदंसम्मोहंसपदिजहासिनस्नुषेकिम् विज्ञानप्रवलतयानिजंमनोऽद्य स्वाधीनंविदुषिकथंनवाविधत्से॥७

पुत्रित्वन्त्यजनिजमोहरोहमुच्चैर्विश्वेशस्मरणरतिम्भृशङ्कुरुष्व संयोगोभवतिवियोगितावसानोदेहोऽयम्पततिनतत्रचित्रमस्ति ॥ ८ ॥ योदेही-

विज्ञानेति अथो असौ श्रीमांल्लक्ष्मीनारायणःकवीन्द्रः विश्वस्तांविधवाम् गणेशदेवीङ्गणेशदेवीतिनाम्नाप्रसिद्धाम् तनूजपत्नीम् पुत्रवधूम् इतिवक्ष्यमाणम् वचनमितियावत् समकथयत् कीदृशीन्तनूजपत्नीम् विभृतःअभितापोयेन एवम्भूतश्चित्तंयस्यास्ताम् स्पष्टमितरत् प्रहर्षिणीवृत्तम्॥१॥संसारइति स्पष्टमिदम् ॥२॥ एतस्मिन्निति स्पष्टमेव ॥३॥ व्युष्टेइति व्युष्टेविभातसमये श्रपितम्पाचितम् अन्नम् प्रदोषेसायङ्काले दोषेण श्रितंयुक्तम् असंशयम् अतिहेयताम् अतिशयेनत्याज्यत्वम् प्रयाति उत्तरार्द्धंस्पष्टम् ॥ ४ ॥ छिद्राणामिति असम्भृतंविभृतम् छिद्राणाम् कर्णनासादीनाम् अमीप्रणाद्यावायवः एवपक्षिणः संवासंस्थितिम् विदधतिकुर्वन्ति स्पष्टमन्यत् ॥ ५ ॥ आत्मेति चिद्रूपोज्ञानस्वरूपः सततसुखास्पदत्वम् आप्तः निरन्तरानन्दमयः स्पष्टमन्यत् ॥ ६ ॥ तस्मादिति स्पष्टमिदम् ॥ ७ ॥ पुत्रीतिस्पष्टम् ॥ ८ ॥ यइति प्रतीतोविश्वस्तः शरणङ्गतोवा प्रेताधिपतिपुर-

श्वरचरणस्मृतिम्प्रतीतस्सुप्रीतोननुकुरुतेनभक्तिः त्यक्त्वेमान्तनुमनुतापसङ्गिचेतास्सप्रेताधिपतिपुरम्परम्प्रयाति ॥ ९ ॥ साजिह्वाखलुशिवनामयाऽभिधत्तेतौकर्णौगिरिशगुणश्रुतिप्रियौयौ तेनेत्रेपशुपतिदर्शनोत्सुकेयेतच्चित्तंस्मरातिमहेश्वरम्परंयत् ॥ १० ॥ विश्वेशेनभवतियस्य भक्तिसक्तिस्तञ्जन्तुञ्जगतिधिगस्तुमन्तुमन्तम् योनित्यंविजितमनाजनाधिनाथङ्कैवल्यप्रदमुपसेवतेसधन्यः ॥ ११ ॥ भोशम्भोगिरिशगिरीशचन्द्रमौले गौरीशस्मरहरपाहिमामजस्रम् इत्युक्त्वोजपतिपुमानकैतवंयस्तद्भाग्यङ्गुरुरपिनक्षमःप्रवक्तुम् ॥ १२ ॥ विश्वेशादपरइहास्तिकःकृपालुस्सम्बिभ्यच्छरणगदीनदुःखहारी इत्यन्तःपरिचितसन्मतिर्विचिन्त्यत्वंशान्तातमविरतंशिवम्भजस्व॥१३

इत्युक्त्वाविरतियुतोयतीशकल्पोऽनल्पश्रीर्मृदुलमनोज्ञसारवद्गीः धीरत्वाऽवनमितनीरधिश्शरीरी सद्धर्म्मप्रकरइवैषजोषमासीत् ॥ १४ ॥ आकर्ण्यश्वशुरवचोमहार्थमेतत्पीयूषोपमितिविनीतपूतचित्ता सासत्याचरणचणाकथञ्चिदुच्चैरत्याक्षीद्दयितवियोगशोकमीषत् ॥ १५ ॥ एकान्ताऽध्युषितकुशासनोपविष्टस्संन्यस्ताऽखिलविषयोपभोगकाङ्क्षः मैत्र्यादिप्रकटितचित्तशुद्धिरेपक्लेशानाङ्कविरथपश्चकान्तदौज्झत् ॥ १६ ॥ मनोरमाङ्घ्रिंरमणीयजानुंनागाजिनाऽधोवसनावृतोरुम् आवर्त्तसद्वर्त्तुलनिम्ननाभिंवलित्रयोल्लासिदरोदराभम् ॥ १७ ॥ विशालवक्षस्स्थलभासमानम्भुजैश्चतुर्भिःप्रविकाशमानम् रङ्कुन्त्रिशूलण्डमरुम्पिनाकन्दधद्भिरुद्योतितनीलकण्ठम् ।१८।

यमनगरम् स्पष्टमन्यत् ॥ ९ ॥ सेति स्पष्टम् ॥ १० ॥ विश्वेशइति मन्तुमन्तमपराधिनम् स्पष्टमन्यत् ॥ ११ ॥ भोइति उत्कउत्सुकः अकैतवमकपटमयथा तथा क्रियाविशेषणमिदम् गुरुरपि वृहस्पतिरपि स्पष्टमन्यत् ॥ १२ ॥ विश्वेशादिति स्पष्टम् ॥ १३ ॥ इतीति एषलक्ष्मीनारायणः कविः स्पष्टमन्यतः ॥ १४ ॥ आकर्ण्येति सा गणेशदेवी पीयूषोपमिति सुधासमम् सत्येनाचरणेन अथवा सत्याः पार्वत्याः आचरणेन यद्वा सतीनाम्पतिव्रतानाम् आचरणेन चणाप्रसिद्धा स्पष्टमन्यत् ॥ १५ ॥ एकान्तेति मैत्रीकरुणामुदितोपेक्षाश्चतस्रोवृत्तयः ताभिः प्रकटिता चित्तशुद्धिर्येनसः क्लेशानामविद्याऽस्मितारागद्वेषाऽभिनिवेशानाम् औज्झदत्यजत् स्पष्टमन्यत् ॥ १६ ॥ मनोरमेति नागाजिनमेवाधोवसनम् तेन आवृताचूरूयस्यसतम् आवर्त्तइवाम्भोभ्रमइव आवर्त्तोऽम्भसाम्भ्रमइत्यमरः सतीरमणीया वर्त्तुलागोलाकारा निम्नागम्भीरा नाभिर्यस्यसतम् बलित्रयोल्लासिनी दरोदरस्यातिकृशजठरस्य आभादीप्तिर्यस्यसतम् स्पष्टमितरत् उपजातिर्वृत्तम् ।१७।

मृगेन्द्रकृत्तिरुचिरांवसानम्पीनांसमुद्यच्चिबुकांशुजालम् मन्दस्मितंसु-
न्दरतानिधानंरम्याधरश्चारुतरास्यशोभम् ॥ १९ ॥ आदर्शदीप्तिव्रजभृत्क-
पोलंमनोज्ञनासारुचिमर्च्यकूर्चम् विलोचनानान्त्रितयेनयुक्तम्भूरोचिषा-
भूरिविराजमानम् ॥ २० ॥ कर्णोज्ज्वलत्कुण्डलिकुण्डलश्रीविभ्राजित-
म्भालगतामलेन्दुम् गङ्गातरङ्गाकुलमौलिमीशंस्मरन्नुदारोऽनयतैणकालम् २१
कुलकम् ॥ धैर्य्यंयस्यधनन्धर्म्मेरतिरव्यभिचारिणी तृणीकृतविधुःकीर्त्तिःकम-
नीयाविराजते ॥ २२ ॥ यदीयाकवितारम्यागम्यासूक्तिमानिता हिता-
हरत्यहोकेषाङ्कोविदानांनमानसम् ॥ २३ ॥ अश्लीललीलशीलावाग्यदा-
स्याज्जातुनोद्भवम् प्रपद्यतेयदीयाधीर्गाम्भीर्येनिधितामिता॥२४॥मनोयस्य-
घनोदारंयोगाभ्यसनतत्परम् पार्वतीपतिपादाब्जद्वन्द्वमाश्रयतेसदा ॥२५॥
कदाऽपिहृदयंयस्याऽनुकम्पाविजहातिनो शान्तिरन्तस्स्थितादान्तंय-
न्मुमुक्षुतिचाश्नुति ॥ २६ ॥ यदीयात्सङ्गतःपुंसान्दोषाःपामरतादयः नाश-
मायान्तिसन्तोषोयस्यभूषणमीप्सितम् ॥ २७ ॥ गुणागणेयतांयस्यनगता-
जनदुर्लभाः अलङ्करोतियोऽद्यापिराजधानीम्पिनाकिनः ॥ २८ ॥ अयाचि-
तव्रतीहीनोरजसातमसाचयः एवमेवचिरञ्जीवन्कवीन्द्रोजयतादसौ ॥२९॥
धातानि[illegible]तुनित्यंसकलगुणगणालङ्कृतान्[illegible]नुदारान्सारान्नाराय-
णस्तानवतुतदहितान्हन्तुशूलीसमन्तून्।राजानोराजमानाजनभरणपराःस-

विशालेति रङ्कुंमृगम् स्पष्टमन्यत् ॥ १८ ॥ मृगेन्द्रकृत्तिमिति पीनौपुष्टौ अंसौस्कन्धौयस्यसतम् स्पष्टमन्यत् ॥ १९ ॥ आदर्शेति आदर्शस्यदर्पणस्य दीप्तिव्रजम्बिभृतइति आदर्शदीप्तिव्रजभृतौ कपोलौयस्यसतम् अर्च्यम् कूर्चम्भ्रु वोर्मध्यंयस्यसतम् स्पष्टमन्यत ॥ २० ॥ कर्णेति कर्णयोः उज्ज्वलन्तौ कुण्डलिनौसर्प्पावेव कुण्डलेकर्णवेष्टनेतयोः कुण्डलङ्कर्णवेष्टनमित्यमरः श्रिया विभ्राजितम् ईशंश्रीशङ्करम् स्मरन् सन् एषः लक्ष्मीनारायणः कवीन्द्रः कालंसमयम् अनयदयापयत् स्पष्टमन्यत् ॥ २१ ॥ कुलकम् । धैर्य्यमिति यस्य लक्ष्मीनारायणस्यकवेः स्पष्टमन्यत् । २२ । यदीयेति स्पष्टमिदम् । २३ । अश्लीलेति स्पष्टम् । २४ । मनइति स्पष्टम् । २५ । कदापीति दान्तञ्जितेन्द्रियम् अश्नातिप्रत्युपसेवते स्पष्टमन्यत् । २६ । यदीयादिति स्पष्टम् । २७ । गुणाइति पिनाकिनः श्रीविश्वनाथस्य राजधानींश्रीकाशीम् स्पष्टमन्यत् ॥ २८ ॥ अयाचितेति असौ लक्ष्मीनारायणोनाम कवीन्द्रः स्पष्टमन्यत् । २९ । धातेति सारान् श्रेष्ठान् तदहितांस्तेषांशत्रून् शूलीभगवान्रुद्रः समन्तून्सापराधान् उल्लसन्तस्स्वमहिम्ना

भुयन्तूल्लसन्तस्सन्तस्सन्तोषमन्तःप्रविलसतुतरांमङ्गलश्रीःपूजानाम् ॥३०॥
नैजैस्तर्जितमेघदूतरघुवंशंसद्गुणैस्सम्मतं ॥ दासीकृत्यकुमारसम्भवमलङ्कारोज्ज्वलंरीतिमत् ॥ माघंसाघमिवाऽऽतनोतिविदधत्पातंकिरातस्ययस्काव्यंमत्कृतमुत्तमंविजयतांलोकेतदेतत्सदा ॥ ३१ ॥
श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्श्रीदेविप्रसादकविनाविहितेनिबन्धे एकादशोऽवसितिमत्रविचित्रलक्ष्मीनारायणीयचरितेऽगमदेषसर्ग्गः ॥ ३२ ॥

इति श्रीमत्कान्यकुब्जवंशावतंसकवीन्द्रदुःखभञ्जनशर्म्मात्मजक
विवरदेविप्रसादनिर्म्मिते कौशल्यगोत्रोद्भवकविवरलक्ष्मी
नारायणशर्मजीवनचरितात्मके मङ्गलाङ्के लक्ष्मी-
नारायणकाव्ये एकादशस्सर्ग्गः ॥ ११ ॥

---

प्रकाशमानाः सन्तोमहात्मानः अन्तरन्तःकरणे सन्तोषम् यन्तुप्राप्नुवन्तु स्पष्टमितरत् स्रग्धरावृत्तम् ॥३०॥ निजस्यात्मनःइमेनैजाःतैः तस्येदमणूनिजशब्दस्यआत्मीयवाचकत्वेतुनिजाएवनैजाःप्रज्ञादित्वात्स्वार्थेअणूसाघम् सद्दुःखम् स्पष्टमन्यत् ॥ ३१ ॥ श्रीति अत्रनिबन्धे अवसितिंसमाप्तिम् इतरत् पूर्ववत् वसन्ततिलकाछन्दः ॥ ३१ ॥ एषाऽशेषाचार्यभावानुकूलाटीकाऽलीकालापलीलाविहीना ॥ नाऽतिस्वल्पानाऽतिविस्तारमाप्तानाऽतिस्पष्टानाऽतिगूढाविभाति ॥ श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्श्रीदेवीप्रसादसुकविःस्वकृतस्यटीकाम् काव्यस्यचारुतराचित्रपवित्रलक्ष्मीनारायणीयचरितस्यशुभामकार्षीत् ॥ ११ ॥

इतिश्रीस्वकृतस्यकौशल्यगोत्रोद्भवकविवरलक्ष्मीनारायणशर्म्मजीवन-
चरितात्मकस्य मङ्गलाङ्कस्य लक्ष्मीनारायणकाव्यस्य
सुमङ्गलाख्यायांव्याख्यायाम् एकादशा-
स्सर्गस्समाप्तः ॥ ११ ॥
समाप्तोयंनिबन्धः

---

दूसरा २ **महापद्मबन्धोऽयम् ।** सर्गः ७ पृष्ठम् ७० श्लोक ३९

सा

वाविचामिरक्षा

हरममविद्यु ग

याप्रज्ञानवद्या

जनानिकवनामिव

पादस्वाधोहिता

दुरितविमलिन

दारुद्धोनकसा

मलगुणनिवहा

सर्गः ७ पृष्ठम् ७०
श्लोकः २८ ।

पहिला १

**लघुपद्मबन्धोऽयम् ।**



श्रीः ।

# अथैतत्काव्यकर्तृकविवंशवर्णनम् ।

आसीदुज्ज्वलकीर्त्तिमण्डलजिताखण्डेन्दुराखण्डला-
ऽऽचार्य्यश्रीरचितोचितव्यवहृतिस्सत्कृत्यविद्भृत्यभृत् ।
भारद्वाजकुलोद्भवःक्षितिसुरोऽभीःकान्यकुब्जःकृती
विभ्राणस्सुकुलाभिधानपदवीमार्यःप्रतापाभिधः ॥ ॥

नम्रक्ष्मापकिरीटरत्नकिरणव्यासङ्गरज्यन्नख-
प्रोद्यत्पूजितपादपद्मयुगलःप्राज्यप्रभावःप्रधीः ।
काशीवासरतोमतोमतिमतान्तस्यात्मजोजायत
ज्योतिर्वित्प्रवरःपराध्यंचरितश्श्रीयुक्तचूडामणिः ॥२॥

तस्याऽभूत्खलुदुःखभञ्जनकविर्लोकोत्तरःकान्तिमान् ।
मान्योधन्यतमस्समस्तजनतागीतप्रशस्ति र्महान् ॥
शर्वाणीचरणोपसेवनपरप्राज्ञप्रियःश्श्रीयुतः ।
क्षोणीमण्डलमण्डनायितयशोराशिःशुभाशीस्सुतः ॥ ३ ॥

साहित्यंसकलाःकलाहयवयःखड्गादिशास्त्रम्वरं
सङ्गीतञ्चषडङ्गदर्शनमतादर्शपरामर्शितम् ।
आलङ्कारिककारिकावतरणञ्चाद्वैततत्वादरं
ब्रह्मानन्दसहोदरंपररसास्वादम्प्रसादङ्गुरोः ॥
सिद्धान्तंगणितद्वयञ्चकरणंतत्ताजिकंजातकम् ।
मौहूर्त्तस्वरशास्त्रपद्धतिगतीसत्संहितांशाकुनम् ॥
यन्त्रंयामलकेरलञ्चरमलन्तन्त्रंविचारंनयम् ।
सायुर्वेदमथागमञ्चनिगमंविस्पष्टमाचष्टयः ॥ ४ ॥

तस्यश्रीयुतदुःखभञ्जनकवेर्देवीप्रसादःकविः
सूनुःसूनशरासनारिचरणध्यानैकतानम्मनः ।
सम्बिभ्रत्कुशलीसलीलसुमतिःप्राप्तप्रमोदोऽमद
स्वान्तःशान्तिमितोनितान्तसरलोदारस्वभावोऽभवत् ॥
वेदाङ्गाङ्केन्दुसङ्ख्येशुभनिकरकरेवैक्रमेवत्सरेऽसौ
माघेतिथ्यांदशम्यांक्षितिसुतदिवसेमासिपक्षेवलक्षे ।
लक्ष्मीनारायणस्यस्वजनकसुहृदःप्रतियेकाव्यमेतत्
लक्ष्मीनारायणाख्यंतदखिलचरितैःशोचितंचार्व्वकार्षीत् ॥५॥

इतिशम् ।

# शुद्धाशुद्धपत्रम्।

| पृ० | पं० | अशुद्धम् | शुद्धम्। |
|---|---|---|---|
| १ | ७ | काव्य | काव्य |
| ,, | ८ | दुःस | दुःख |
| ,, | ,, | वीन्द्र | कवीन्द्र |
| २ | ११ | णायो | णोया |
| ,, | १३ | त्पमरः | त्यमरः |
| ,, | १६ | विलशता | विलसता |
| ,, | २० | रण्यन् | रण्यम् |
| ३ | १ | नामक मुत्तम | नामकमुत्तम |
| ,, | ६ | मान मान | मानमान |
| ,, | ११ | सेति | .सेतिपाठे |
| ,, | १९ | विराचितम् | चिराचितम् |
| ,, | २३ | सुष्टु | सुष्ठु |
| ४ | ११ | रेंच | रेंच |
| ५ | १ | कृतोक्षः | कृतिज्ञः |
| ,, | २ | भव द्यः | भवद्यः |
| ,, | ३ | हरणो चितम् | हरणोचितम् |
| ,, | ४ | त्करण | स्करण |
| ,, | १४ | तिकका | तिलका |
| ६ | १ | आर्या समान | आर्यासमान |
| ,, | १३ | शिवा म्भसः | शिवाऽम्भसः |
| ७ | ४ | जनन्य नन्य | जनन्यनन्य |
| ,, | ५ | गीति मा | गीतिमा |
| ८ | १ | स्तथ्या मिति | स्तथ्यामिति |
| ,, | ,, | वाणी मिम | वाणीमिम |
| ,, | १० | स्या ति | स्याऽति |
| ९ | ७ | षत्नी | पत्नी |
| ,, | ९ | श्रीदे | मश्रीदे |
| १० | ८ | मपि | मपि |
| ,, | १५ | जाति | जाति |
| ,, | २१ | जातिच्छन्दः | जातिश्छन्दः |
| ,, | २६ | दर्ष्प | दर्प्प |
| ११ | १ | पक्ष्म चक्षुः | पक्ष्मचक्षुः |
| ,, | ६ | रक्षामितः | रक्षामितः |
| ,, | १६ | भ्राजिष्म्वति | भ्राजिष्णवति |
| ,, | १८ | च्छिन्दः | श्छन्दः |
| ,, | २३ | उपाजातिच्छन्दः | उपजातिश्छन्दः |
| १३ | १६ | न्कर्मणि | न्कर्मणि |
| १३ | २९ | जितास्तिरस्कृतः | जितास्तिरस्कृतः |
| १५ | ५ | स्साश्रित | स्साश्रित |
| ,, | १३ | उपजाति | इन्द्रवज्रा |
| १६ | ५ | लक्ष्मा | लक्ष्मी |
| ,, | २० | संसारीन | संसारनि |
| १७ | १४ | याशिष्यत्य | शिष्यस्य |
| ,, | १६ | पनं | पनं |
| १९ | ९ | वर्त्तिंना | वर्त्तिना |
| ,, | २० | त्सवं | त्सवे |
| २१ | १ | रभ्य | रम्य |
| ,, | ,, | लक्ष्मि | लक्ष्मी |
| ,, | १० | वेद | वेद |
| ,, | ११ | विचार | विचार |
| ,, | १५ | त्वमितान- अमिताअन- मिता | तिनामितासहसु- पेतिसमासः न- नमिताअनामिता |
| ,, | १७ | व | वा |
| ,, | २१ | तास्मिन्वा | तस्मिन्वा |
| ,, | २५ | शम्भुता | शम्भुना |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २७ | सुवर्ण | सुन्दरसुवर्ण |
| ,, | ,, | शोभमान | रम्यशोभमान |
| ,, | ३३ | हशिवः | हरिशवः |
| २२ | ५ | पूजता | पूजिता |
| ,, | ६ | आयांदाक्षायिणी | आर्यादाक्षायणी |
| ,, | ७ | दाक्षायिणी | दाक्षायणी |
| ,, | ,, | वीक्षा | विक्षा |
| ,, | ९ | चानी | चीना |
| ,, | १० | दाह | दाहे |
| ,, | १२ | भागवती | भगवती |
| ,, | १७ | मानोत | मानेति |
| ,, | ३१ | सीहता | सहिता |
| २३ | ४ | कीदशाव्रि | कीदशी-व्र |
| २३ | ५ | मश्वर | मेश्वर |
| ,, | ,, | रव | रेव |
| ,, | ८ | क्ष | क्षे |
| ,, | १५ | ता | ना |
| ,, | २३ | प | ष |
| ,, | ,, | ङ्ग | ङ्गृ |
| ,, | ३२ | व | वे |
| २४ | ७ | त्याः | त्योः |
| ,, | ९ | र | रे |
| ,, | ,, | श्र | श्रे |
| ,, | १० | द | दे |
| ,, | १३ | श | शे |
| ,, | ,, | भूमा | भूमौ |
| ,, | २० | ब | ध |
| ,, | २१ | त्न | त्ने |
| २५ | ६ | ईड्य | ईड्यं |
| ,, | १० | पर्वा | पूर्वा |
| ,, | ,, | श्रो | श्रो |
| ,, | ११ | इ.ता | इता |
| ,, | १२ | भे | मे |
| ,, | १३ | न | नि |
| ,, | १४ | ख | [illegible] |
| ,, | १५ | र | रे |
| ,, | ,, | द | दे |
| ,, | १७ | यस्यां | यस्यां |
| ,, | १८ | भामा | भोम |
| ,, | २० | क्र | क्रं |
| ,, | २१ | नं | न |
| ,, | ,, | तथ | तथा |
| ,, | २४ | तन | तेन |
| ,, | २६ | को | कौ |
| ,, | ३० | अ | अपा |
| ,, | ३१ | य | यें |
| ,, | ,, | योग | योगि |
| ,, | ३२ | पद | पदं |
| ,, | ३३ | भ्रि | भ्रि |
| २६ | ३ | स्नात्वाऽतत्र | स्नात्वाऽथतत्र |
| ,, | ५ | सुगान्ध | सुगन्धि |
| ,, | ६ | दपि | दीप |
| ,, | १० | यस्या | यस्याः |
| ,, | ११ | नत्र | नेत्र |
| ,, | २३ | त | न |
| ,, | ३१ | णयि | णीय |
| ,, | ३२ | भ्यांङ्गे | भ्याङ्गे |
| २७ | २ | म्पीर | म्परि |
| ,, | ४ | हारि | हारि |
| ,, | ८ | त्वम | त्वम् |
| ,, | ३२ | दा | दो |
| २८ | ८ | शंना | शंना |
| ,, | २३ | तीर | तरि |
| ,, | २५ | स्ताम | स्तोम |
| ,, | ,, | स्ताम | स्तोम |
| ,, | २७ | तत | तत् |

# शुद्धाशुद्धपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ” | २८ | त्वतः | त्वत्तः |
| ” | ” | ाव | वि |
| ” | २९ | ड | ङ |
| ” | ३२ | ताान | तानि |
| ” | ” | इभाः | इभाः |
| २९ | ६ | धू | धूँ |
| ” | ९ | भूार | भूरि |
| ” | १० | ान | नि |
| ” | १७ | स | सः |
| ” | ” | वै | वै |
| ” | २० | भाक्त | भक्ति |
| ” | २८ | लक्ष्मानि | लक्ष्मीना |
| ” | ३० | तम् | तम् |
| ३० | ११ | ग्गकःतषाम् | ग्गैकःतेषाम् |
| ” | १२ | ाध | धि |
| ” | १३ | रं | रं |
| ” | ” | गं | गे |
| ” | १४ | गो | गी |
| ” | १५ | श्रो | श्री |
| ” | १६ | जा | जो |
| ” | ” | ातराावः | तिणिवः |
| ” | ” | रिात | रिति |
| ” | १८ | दव | देव |
| ” | ” | इाते | इति |
| ” | १९ | वर्णन् | वर्णयन् |
| ” | ” | पति | पति |
| ” | २० | नेवझो | नवेझी |
| ” | ” | ध्ये | ध्ये |
| ” | २२ | युनक्ति | युनक्ति |
| ” | २८ | ातभावः | तिभावः |
| ” | ३० | त्वमवे | त्वमेव |
| ३१ | २ | हावि | हवि |
| ” | ५ | वहुविध | बहुविध |
| ” | ” | रंस | रसं |
| ” | ६ | ध्यां | ध्यां |
| ” | ७ | र्शा | शी |
| ” | १० | नौ | मौ |
| ” | १२ | ना | नौ |
| ” | १४ | न | ना |
| ” | १५ | ाक्तः | क्तिः |
| ” | २१ | साग | साग्नि |
| ” | २९ | क | के |
| ” | ३० | माति | मति |
| ३२ | ११ | ध्वजंवशा | ध्वजवंशा |
| ” | १२ | गात्रांङ्ग | गोत्रेङ्ग |
| ” | १४ | मर्तिाइशक्षि | मतिाइशक्षि |
| ” | १५ | तिश | तिशे |
| ” | १६ | ना | मां |
| ” | ” | वाग | वारा |
| ” | १७ | श्रोका | श्रीका |
| ” | ” | न्सन्तिस्नः | न्संतिस्नः |
| ” | १८ | दव | देव |
| ” | २० | णमि | णीम |
| ” | २२ | भोष्ठ | भोष्ठ |
| ” | ” | नाशन | नाशन |
| ” | २४ | मो | मां |
| ३३ | ४ | हितसभि | हितसद्भि |
| ” | ५ | श्रीवै | श्रीवै |
| ” | २७ | तुत | तुतम् |
| ३४ | ८ | न्तरुच | न्तरुचि |
| ” | १२ | सम्भृ | सम्भृ |
| ” | २३ | ध्य | ध्य |
| ३५ | १ | रौर | रीरि |
| ” | १७ | येन | येन |
| ” | २४ | लय | लयम् |
| ” | २८ | विवक | विवेक |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३५ | ३० | जय | जग |
| ३६ | ९ | दाश्वि | दीश्व |
| ,, | १८ | लक्ष्म्याः | लक्ष्म्याः |
| ३७ | ४ | क्षि | क्षि |
| ,, | ७ | त्वामथि | त्वमथि |
| ,, | ,, | जं | जं |
| ,, | १० | तेत्यत्र | तेत्यत्र |
| ३७ | ,, | त्यो | त्यो |
| ,, | ,, | दातो-पदेशे | दान्तो-पदेशे |
| ,, | १२ | तो | तो |
| ,, | १४ | ते | ते |
| ,, | १८ | मांन | मानि |
| ,, | ,, | श्चा | श्चो |
| ,, | २७ | जिजियं | जिज्ञयं |
| ,, | २९ | घं | घं |
| ,, | ३२ | हिं | हिं |
| ,, | ,, | अद्यादे | अद्येदा |
| ३८ | १ | कारिणः | कारिणः |
| ,, | ६ | धीह्य | धीह्र |
| ,, | ८ | जीवि | जोयि |
| ,, | ९ | घं | घं |
| ,, | १५ | रक्तीकृताघा | रक्तीकृतावा पु. की. घनंयथातथाक्षराः यद्वा घनाश्चतेक्षराः सान्द्रतीक्ष्णाःइतियावत् |
| ,, | २० | पूजिता | पूज्रिता |
| ,, | २२ | लक्ष्मीमा | लक्ष्मीमा |
| ,, | २४ | विपान् | निपान् |
| ,, | ३२ | श्शेषा | शेषा |
| ३९ | १२ | पेस्था | पेस्था |
| | | मांग | मनि |
| ,, | १३ | के | के |
| ,, | १५ | सेनेति | सेनेति |
| ,, | २६ | च्यति | च्यति |
| ,, | ,, | तुसं-न्धेया | तुस-न्धेया |
| ४० | ८ | स्रवा | स्रंवा |
| ,, | ,, | नपुंस-कमिति | नपुंस-कामिति |
| ,, | ९ | रा | रा |
| ,, | १७ | त्वा | त्वा |
| ,, | २३ | से | से |
| ,, | ३० | कर्त्तीर | कर्त्तरि |
| ४१ | १५ | मासस्य | मांसस्य |
| ,, | २९ | पद्म | पद्द |
| ४२ | २ | मिह | मिह |
| ,, | ५ | हृदयेस | हृदयेस |
| ,, | २१ | रक्षो | रक्षो |
| ,, | २५ | क्षन्ति | क्षान्ति |
| ,, | २७ | नम् | नम् |
| ,, | ३२ | यस्यासा | यस्याऽस्सा |
| ४३ | ४ | प्रकृति | प्रकृति |
| ,, | १२ | क्मिा | क्मिवा |
| ,, | १६ | द्वो | द्वौ |
| ,, | ,, | त्रे | त्रे |
| ,, | ,, | हे | हे |
| ,, | १७ | तां | तो |
| ,, | ,, | ड़ो | श्रो |
| ,, | १९ | ये | ये |
| ,, | ,, | ये | ये |
| ,, | ,, | दै | दै |
| ,, | २० | खेले | खेले |
| ,, | २२ | य | ये |
| ,, | ,, | स्य | स्ये |
| ,, | २४ | म | मे |
| ,, | २६ | क्र | क्र |
| ,, | २८ | क्रो | क्रो |
| ,, | ३० | ंर | रि |
| ४४ | ११ | ना | नो |
| ,, | १४ | द्वो | द्वौ |
| ,, | १५ | शतः | स्ततः |
| ,, | २० | व्र | वे |
| ,, | ,, | त | ते |
| ,, | ,, | स्त | स्ते |
| ,, | ३२ | अखिलसवम् भातवृहद्वा। | अखिलंसर्वम् अतिवृहद्वा। |
| ४५ | १४ | रुप्र | रुप्र |
| ,, | १८ | के | के |
| ,, | १९ | पवि | पवि |
| ,, | २० | प्याला | व्याला |
| ,, | ,, | पूर्वत् | पूर्ववत् |
| ,, | २१ | पं | प |
| ,, | २६ | मंहित | महित |
| ,, | ३० | पस्थि | पस्थि |
| ,, | ३१ | हे | हे |
| ४६ | ४ | नल्पा | ऽनल्पा |
| ,, | २६ | म्प्र | म्प्र |
| ४७ | १९ | प्रसि | प्रसि |
| ,, | २३ | णम् तु | णन्तु |
| ,, | २५ | धर्म्मेति | धर्म्मेति |
| ,, | २६ | र्म्मका | र्म्मका |

# शुद्धाशुद्धपत्रम्।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४८ | ११ | सज्जव | सज्जन |
| „ | १६ | नं | नि |
| ४९ | २ | मीन | मनि |
| „ | „ | तीच्र | तचि |
| „ | २१ | दर्शनोत्कांण्ठतमानससासता | दर्शनोत्कण्ठतमानससासती |
| „ | „ | पुरारेः | पुरारेः |
| „ | २८ | लां | लो |
| ५० | १३ | प्रशशस | प्रशशंस |
| „ | १४ | नं | ने |
| „ | २१ | रो | रो |
| „ | २९ | शि | शि |
| ५१ | १७ | तं | ते |
| „ | १८ | नीत्त | नीत |
| „ | २६ | तव | तव |
| „ | २९ | परम्प | परम्परा |
| ५२ | १२ | तत्सबुद्धो | तत्संबुद्धा |
| „ | २१ | पण्डितैः | पण्डितैः |
| ५२ | २९ | असका | असकौ |
| „ | ३१ | गो | गो |
| „ | „ | तंति | तेंति |
| „ | ३२ | लक्ष्मी विलास | लक्ष्मीवि लास |
| ५३ | ८ | फारो | स्फारो |
| „ | „ | भोावे | भो वि |
| ५४ | २ | तङ्गि | तङ्गि |
| „ | ७ | दं | दै |
| „ | २० | कुष्ट | कुष्ठ |
| „ | २२ | देशें | देशैं |
| „ | २५ | त | त् |
| „ | २८ | दिभि | दिभि |
| ५५ | ५ | भासिनी | भासिनी |
| „ | ८ | जनी | जनी |
| „ | „ | काशिनी | काशिनी |
| „ | ९ | रूपीन | रूपनि |
| ४९ | ४ | स्प्रति | स्प्रति |
| „ | १० | स्याशि | स्याशि |
| „ | १६ | क्तो | क्तो |
| „ | १७ | वैर्दु | वैर्दु |
| ५५ | १० | विहीन | विहीन |
| „ | „ | बर्ग | वर्ग |
| „ | १३ | यत्रंति | यत्रेति |
| „ | १६ | ादेव | दिदेव |
| „ | २१ | स्वरा | स्वरा |
| ५६ | १ | तीत्र | तात्रि |
| „ | २ | मीस | मसि |
| „ | „ | त्तठ | त्तटे |
| „ | ६ | मीत | मति |
| „ | १२ | रंहोवेगो | रंहोवेगो |
| „ | १३ | त्रीव | त्रवि |
| „ | १४ | अभि | अभि |
| „ | १५ | यैरि | यैरि |
| „ | १६ | त्तटं | त्तटे |
| „ | १८ | सो | सो |
| „ | २१ | णे | णै |
| „ | २३ | पियैः | प्रियैः |
| „ | „ | द्धं | द्धं |
| „ | २४ | ते | ते |
| „ | २७ | विला | विला |
| „ | २९ | णिनिः | णिनिः |
| ५७ | ३ | सम | सम |
| „ | ९ | पे | पे |
| „ | „ | ग्मे | ग्मे |
| „ | „ | ते | ते |
| „ | १२ | रे | रे |
| „ | १३ | मेघ | मंघ |
| „ | १६ | णी | णी |
| „ | २९ | मद्यं | मद्ये |
| ४९ | १८ | दों | दों |
| „ | १९ | वन्द्रि | वीन्द्र |
| „ | २० | देशे | देशे |
| ५८ | ४ | वर्ज्जि | वर्ज्जि |
| „ | १० | यत्र | यत्र |
| „ | १३ | शषपक्षं | शेषपक्षे |
| „ | १७ | से | से |
| „ | १८ | सेनाको | सेनाको |
| „ | „ | तं | ते |
| „ | १९ | तं | ते |
| „ | २० | दे | दे |
| „ | २२ | म् | म |
| „ | २३ | से | से |
| „ | २६ | सित | सितं |
| „ | २८ | को | को |
| ५९ | ११ | तिदि | तिदि |
| „ | १४ | मिति | मिति |
| „ | १५ | घां | घो |
| „ | १८ | ये | ये |
| „ | २२ | कर्त्ता | कर्त्ता |
| „ | २५ | नोव | नोव |
| „ | २९ | बक्र | वक्र |
| ६० | ५ | सदुद्धा | सदुद्धा |
| „ | ११ | शे | शे |
| „ | २५ | गौ | गौ |
| ६१ | १ | सनाकम् | त्पताकम् |
| „ | १२ | ते | ते |
| „ | १६ | इती | इति |
| ६२ | ९ | वंशस्थं | वंशस्थ |
| „ | १२ | शोर्यै | शौर्य्यै |
| „ | „ | धै | धै |
| „ | १४ | त्काण्ठ | त्कण्ठि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६२ | १८ | यादि | यादि |
| " | १९ | ति | ति |
| " | २० | श्रे | श्र |
| " | २१ | के | के |
| ६३ | १० | जसे | जसे |
| " | " | त्रेणै | त्रेणै |
| " | १९ | सतीात | सतीति |
| " | १२ | वोन्मे | वोन्मे |
| " | " | प्रीत | प्रति |
| " | " | तोत | तेति |
| " | १५ | मलोऽस्त्रां | मलोऽस्त्री |
| " | " | विट् | विद् |
| " | १८ | पडि | षडि |
| " | १९ | ये | ये |
| " | २२ | र्णा | र्णा |
| ६४ | ४ | तांवि | ता-वि |
| " | ११ | से | से |
| " | २० | पदा | पदा |
| ६५ | १२ | आहितान् | अहितान् |
| " | २१ | साध्वीख | साध्वखि |
| " | २६ | तुरपि | तुरीप |
| " | २७ | शभि | शी-भ |
| ६६ | ३ | न्दनि | न्दीन |
| " | १६ | सो | सों |
| " | १९ | निवासे | निवासे |
| " | २२ | वें | वें |
| " | ३२ | मि | मि |
| ६७ | ५ | मोक्षीमति | मोक्षमिति |
| " | ७ | कीदृशात्विम | कीदृशीत्वम् |
| " | १९ | भारस्से | भारास्से |
| " | २० | अनेदि | अनादि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६७ | ३० | ते | ते |
| " | " | भावः | भावा |
| ६८ | ५ | रपि | रपिं |
| " | ६ | म | म् |
| " | " | ङीप् | ङीप् |
| " | ९ | लाकनं | लोकनं |
| " | २९ | दिन्द्रादनि | दिन्द्रादीना |
| ६९ | १३ | नि | नि |
| " | १५ | म | म् |
| " | २१ | रे | रे |
| ७० | ९ | हि | हि |
| " | १० | ति | ति |
| " | १६ | व्दे | व्दे |
| " | २६ | ये | ये |
| " | २७ | पु. ली. | पु. की. |
| " | " | आतश्चोपसर्गेक | आतश्चोपसर्गे |
| " | २८ | पु.ली. | पु.की. |
| " | ३१ | लर्माणि | कर्मणि |
| " | ३२ | टाप | टाप् |
| ७१ | ३ | आतो | आत |
| " | ४ | नुपसर्गेक | श्चोपसर्गे |
| " | ७ | द्धो | द्धो |
| " | १६ | विबुधा | विबुधा |
| " | २४ | िनवहा | निवहा |
| " | ३२ | ने | ने |
| ७२ | ७ | हे | हे |
| " | १४ | नेअति | हेअति |
| " | २८ | मर्त्तरि | कर्त्तरि |
| ७४ | ६ | दवि | देवि |
| ७५ | २३ | वशााद | वशादि |
| " | २४ | दंहो | दहो |
| " | २६ | वयीम | वयमि |
| " | २७ | सेवि | सेविं |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७६ | ५ | ज्ञातः स्ततः | ज्ञातस्त-तः |
| " | ८ | रीँवेशः | रीँवेशः |
| " | १४ | श्रांराज्ञी | श्रीराज्ञी |
| " | २९ | रींवा | रीवाँ |
| " | २५ | देशेपुं | देशेषु |
| " | २६ | रींवेशः | रींवेशः |
| ७७ | १५ | दृष्टा | दृष्ट्वा |
| ७८ | १६ | ग्रन्थ | ग्रन्थं |
| " | २७ | णले | णेन |
| ७९ | १ | सख्य | संख्य |
| " | २ | स्समङ्गल | स्समङ्गल |
| " | २६ | कीनभः | कनिभः |
| ८० | २० | अथान्तरम् | अथाऽनन्तरम् |
| ८१ | १ | महा कम | महा-कम |
| " | १० | तां | तीं |
| " | १८ | नीति | नीति |
| ८२ | २३ | गो | गो |
| " | २९ | माला | माला |
| ८३ | १ | णयि | णीय |
| " | ३ | भञ्ज | भञ्जन |
| ८४ | १५ | घ्यनि | घ्यति |
| " | २४ | घे | घे |
| ८५ | १५ | दिवि | दिवि |
| " | " | दैष | देष |
| " | १९ | सानि | सानि |
| " | २६ | स्वभा | स्वाभा |
| ८६ | ६ | न्दनि | न्दीन |
| " | ८ | तोनि | तेनि |
| " | " | समाप्ति | समाप्ति |
| " | १० | दुःख भञ्जन | दुःखभञ्जन |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १७ | मो | मो |
| ८६ | १८ | तण्वुल | तिण्वुल् |
| ,, | २२ | क्ये | क्ये |
| ८७ | ५ | क्षाछि | क्षाद्वि |
| ,, | ८ | क्रिङ्कि | किङ्कि |
| ,, | ,, | म्वृत | म्वृत |
| ,, | १२ | हं | हं |
| ,, | १४ | जीन | जनि |
| ,, | ,, | रीति | रति |
| ,, | २२ | म्वृतं | म्वृतं |
| ,, | २४ | रूषो | रूपो |
| ,, | २६ | पुत्रीति | पुत्रीति |
| ८८ | १ | भक्तिः | भक्तियुक्तः |
| ,, | ५ | गति | गति |
| ,, | ,, | कैबल्य | कैवल्य |
| ,, | ६ | धन्यः | धन्यः |
| ,, | १० | कल्यो | कल्पो |
| ,, | १२ | महाथं | महार्थं |
| ,, | १६ | जानुं | जानुं |
| ,, | १८ | रङ्कुन्त्र | रङ्कुन्त्रि |
| ,, | २० | म् | म् |
| ,, | २३ | र्ये | र्यें |
| ,, | ,, | पे | पे |
| ,, | ,, | दे | दे |
| ,, | २५ | मे | मै |
| ,, | ,, | पक्षा | पेक्षा |
| ,, | २६ | क्ले | क्ले |
| ,, | २८ | तों | तौं |

## शमिति ।

श्रीदुःखभञ्जनकवीन्द्रतनूजनुश्श्री-
देवीप्रसादकविनेदसशोधिकाव्यम् ॥
अस्मिंस्तथापिनयनभ्रमदोषतोया ऽ
शद्धिर्भवेद्बुधजनानन्नुतांक्षमन्ताम् ॥ १ ॥



